॥ मूलम् ॥—नउई पंचाणउई । अट्ठाणउई तहेव नउई ॥ एवइयाइं सहस्साइं । सप्पएसाण विवरीयं ॥ ३५ ॥ व्याख्या—' नउइत्ति ' वैपरीत्येन सप्रदेशानां नवतिश्च सहस्राणां क्रमेणावगंतव्या. वैपरीत्यं चेदं—क्षेत्रतः सप्रदेशानां नवतिसहस्राणि, द्रव्यतः सप्रदेशानां पंचनवतिः सहस्राणि, कालतः सप्रदेशानामष्टनवतिः सहस्राणि, भावतः सप्रदेशानां नवनवतिः सहस्राणीति.

॥ मूलम् ॥—एएसिं जहासंभव—मत्थोवणयं करिज्ज रासीणं ॥ सब्भावओ य जाणिज्ज । ते अणंते जिणाभिहिए ॥ ३६ ॥ व्याख्या—' एएसिंत्ति ' एतेषां पूर्वोक्तानां सप्रदेशानां राशीनां यथासंभवमर्थोपनयं अर्थभावनां कुर्यात्. अर्थभावना तु सप्रदेशानामल्पबहुत्वविचाररूपा पूर्वव्याख्याने कृतैवेति नेह प्रतन्यते. अत्र लक्षसंख्यानां पुद्गलानामल्पबहुत्वविचारणमव्युत्पन्नमतिशिष्यव्युत्पादनार्थं, परमार्थतस्तु तान् पुद्गलाननंतान् जिनाभिहितान् जानीयादिति ॥ ३६ ॥ इति श्रीमच्छ्रीरत्नसिंहसूरिविरचिता पंचमभगवत्यंगपंचमशतकप्ररूपितपुद्गलषट्त्रिंशिकावृत्तिः समाप्ता. श्रीरस्तु.

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥ श्रीरस्तु ॥

॥ मूलम् ॥—ते चेव य ते चउहिंवि । जमुवचरिज्जंति पुग्गला दुविहा ॥ तेण उ वड्ढी हाणी । तेसिं अन्नोन्न संसिद्धा ॥ ३२ ॥ व्याख्या—' ते चेवत्ति ' तस्मात्पुद्गला द्विविधाः सप्रदेशा अप्रदेशाश्चेत्यर्थः, उपचर्यंते विशिष्यंते चतुर्भिरपि भावकालादिभिः, परमार्थतस्तु त एव ते नान्ये. अयमर्थः—ये किल कल्पनया पुद्गला लक्षसंख्या उक्तास्ते परमार्थेन त्वनंताः संति. तेषां मध्यात्केचिद् द्रव्यतोऽप्रदेशाः, शेषास्तु द्रव्यतः सप्रदेशाः. य एव द्रव्यतोऽप्रदेशाः सप्रदेशाश्च विचार्यंते, तेन तेषां पुद्गलानां वृद्धिर्हानिश्च अन्योन्यसिद्धा इतरेतराश्रयेति परस्परापेक्षयेत्यर्थः ॥ ३२ ॥

॥ मूलम् ॥—एएसिं रासीणं । निदरिसणमिणं भणामि पच्चक्खं ॥ बुद्धीए सव्वपुग्गल—जावं तावाए लक्खाउ ॥ ३३ ॥ व्याख्या—' एएसिंत्ति ' एतेषां राशीनामिदं प्रत्यक्षं निदर्शनं भणामि, बुद्ध्या कल्पनया यावंतः सर्वे पुद्गलास्तावंतो लक्षा इति ॥ ३३ ॥

॥ मूलम् ॥—इक्कं च दो य पंच । दस य सहस्साइ अप्पएसाणं ॥ भावाईणं कमसो । चउण्हवि जहोवइट्ठाणं ॥ ३४ ॥ व्याख्या—' इक्कं चेति ' एकं द्वे पंच दश सहस्राणि अप्रदेशानां भावकालद्रव्यक्षेत्राणां चतुर्णामपि यथोपदिष्टानां क्रमेणावगंतव्यानि ॥ ३४ ॥

था यदेव द्रव्याप्रदेशेभ्यः क्षेत्राप्रदेशेषु सहस्रपंचकं वर्धते, तदेव द्रव्यसप्रदेशेभ्यः क्षेत्रसप्रदेशेषु हीयत इति. स्थापना सूत्रमध्ये विलोक्या ॥ २९ ॥

॥ मूलम् ॥—अहवा खित्ताईणं । जमप्पएसयाण हायए कमसो ॥ तं चिय खित्ताईणं । परिवड्ढइ सप्पएसाणं ॥ ३० ॥ व्याख्या—' अहवेत्ति ' अथवा द्रव्यक्षेत्रादीनां यदप्रदेशानां हीयते क्रमशस्तदेव सप्रदेशानां क्षेत्रादीनां परिवर्धते इति. अयमर्थः—क्षेत्राप्रदेशेभ्यो द्रव्याप्रदेशेषु पंच सहस्रा हीयंते, तत एव क्षेत्रतः सप्रदेशेभ्यो द्रव्यसप्रदेशेषु वर्धते. तथा य एव द्रव्यतोऽप्रदेशेभ्यः कालाप्रदेशेषु त्रयः सहस्रा हीयंते, त एव द्रव्यसप्रदेशेभ्यः कालप्रदेशेषु वर्धते. तथा यदेकं सहस्रं कालाप्रदेशेभ्यो भावाप्रदेशे हीयते तदेव कालसप्रदेशेभ्यो भावसप्रदेशेषु वर्धते इति ॥ ३० ॥

॥ मूलम् ॥—अवरुप्परप्पसिद्धा । वुड्ढी हाणी अ होइ दुण्हंपि ॥ अपएस सप्पएसाण । पुग्गलाणं स लक्खणओ ॥ ३१ ॥ व्याख्या—' अवरुत्ति ' परस्परतोऽन्योन्यापेक्षया प्रकर्षेण सिद्धा प्रतिष्ठिता स्वलक्षणतः स्वस्वरूपतो वृद्धिर्हानिश्च भवति, द्वयोरपीति पुद्गलानां भावकालद्रव्यक्षेत्रविशिष्टानां क्रमोत्क्रमाभ्यां वृद्धिहानिमतां अप्रदेशराशेः सप्रदेशराशेश्चेत्यर्थः ॥३१॥ अमुमेवार्थं व्यनक्ति—

॥ मूलम् ॥—पढमं अप्पएसाणं । बीयं पुण होइ सप्पएसाणं ॥ तइयं पुण मीसाणं । अप्पबहु अब्भुज्ज तिन्नि ॥ २८ ॥ व्याख्या—' पढमंति ' प्रथमं द्रव्याद्यप्रदेशानां चतुर्णां पुद्गलराशीनां परस्परमल्पबहुत्वमुक्तं. द्वितीयं तेषामेव द्रव्यादितः सप्रदेशानां. तृतीयं मिश्राणामिति सप्रदेशानां मिलितानामित्यर्थतो व्याख्यानद्वारेण त्रीण्यल्पबहुत्वानि भवंति. सूत्रे त्वेकमेवाल्पबहुत्वमिति. ॥ २८ ॥ सप्रदेशानामन्योन्यं ह्रासवृद्धिप्रमाणमाह—

॥ मूलम् ॥—गणे गणे वुड्ढइ । भावाईणं जमप्पएसाणं ॥ तं चिय भावाईणं । परिहस्सइ सप्पएसाणं ॥ २९ ॥ व्याख्या—' गणेत्ति ' भावादीनामादिशब्दात्कालद्रव्यक्षेत्राणामप्रदेशानां स्थाने स्थाने यद्वर्धते तदेव सप्रदेशानां भावादीनां परिह्रस्यते. यथा किल कल्पनया लक्षं पुद्गलाः, तेषु भावतः कालतो द्रव्यतः क्षेत्रतश्चाप्रदेशाः क्रमेण एक द्वि पंच दशसहस्रसंख्याः संहृताः, सप्रदेशास्तु नवनवति अष्टनवति पंचनवति नवतिसहस्रसंख्याः, ततश्चाभावप्रदेशेभ्यः कालाप्रदेशेषु सहस्रं वर्धते, तदेव भावतः सप्रदेशेभ्यः कालतः सप्रदेशेषु हीयते. तथा यदेव कालाप्रदेशेभ्यो द्रव्याप्रदेशेषु सहस्रत्रयं वर्धते तदेव कालसप्रदेशेभ्यो द्रव्यसप्रदेशेषु हीयते. त-

द्रव्यतः सप्रदेशेभ्यः कालतः सप्रदेशा विशेषाधिकाः, कालतः सप्रदेशेभ्यो भावतः सप्रदेशा विशेषाधिका इति ॥ २५ ॥ अथ मिश्राल्पबहुत्वमाह—

॥ मूलम् ॥—मीसाण संकमं पइ—पएसा खित्तउ असंखगुणा ॥ जणिआ सठाणे पुण । थोवच्चि अ ते गहेअव्वा ॥ २६ ॥ व्याख्या—' मीसाणत्ति ' मिश्राणामित्यप्रदेशसप्रदेशानां मीलितानां संक्रमंप्रतिऽप्रदेशेभ्यः सप्रदेशेष्वल्पबहुत्वविचारसंक्रमे क्षेत्रतोऽप्रदेशेभ्यः क्षेत्रतः सप्रदेशा असंख्यगुणाः, स्वस्थाने पुनरप्रदेशान् विहाय केवलं सप्रदेशचिंतायां द्रव्यकालभावानां सप्रदेशानां क्रमशो विशेषाधिकानामपेक्षया स्तोका एव, ते क्षेत्रतः सदप्रशा इति ॥ २६ ॥ एतदेवोच्यते—

॥ मूलम् ॥—खित्तेण सप्पएसा । थोवा दव्वद्धभावउ अहिया ॥ सपएसप्पाबहुयं । सठाणे अव्वउ एवं ॥ २७ ॥ व्याख्या—' खित्तेणत्ति ' शेषसप्रदेशापेक्षया क्षेत्रतः सप्रदेशाः स्तोकाः, स्तोकत्वे च साध्ये युक्तिः पूर्वविचारितैव. ' दव्वद्धभावउ अहियत्ति ' द्रव्यतः कालतो भावतश्च सप्रदेशाः क्रमशो विशेषाधिकाः. अर्थत इति व्याख्यानापेक्षया एवं स्वस्थाने सप्रदेशानां पुद्गलानामल्पबहुत्वमवगंतव्यमिति ॥ २७ ॥ अल्पबहुत्वसंख्यामाह—

नीति ॥ २३ ॥ अथ द्रव्यतः कालतो भावतश्च सप्रदेशानां प्रमाणमाह—

॥ मूलम् ॥—दव्वेण हुंति इत्तो । सपएसा पुग्गला विसेसहिया ॥ कालेण य भावेण य । एमेव भवेवि सेसहिया ॥२४॥ व्याख्या—' दव्वेत्ति ' भावाप्रदेशाः १००० कालाप्रदेशाः २००० द्रव्याप्रदेशाः ५००० क्षेत्राप्रदेशाः १०००, एभ्यः क्षेत्रतः सप्रदेशेभ्यो द्रव्यतः सप्रदेशाः पुद्गला विशेषाधिकाः. तथा द्रव्यसप्रदेशाः ९९००० सप्रदेशाः ९८००० सप्रदेशाः ९५००० सप्रदेशाः ९०००० ततः सप्रदेशेभ्यः कालतः सप्रदेशा विशेषाधिका इति ॥ २४ ॥ अमीषां विशेषाधिकत्वे युक्तिमाह—

॥ मूलम् ॥—भावाईया वुड्ढी । असंखगुणिया जमप्पएसाणं ॥ तो सप्पएसयाणं । खित्ताइ विसेसपरिवुड्ढी ॥ २५ ॥ व्याख्या—' भावाइत्ति ' यस्मादप्रदेशानां पुद्गलानां भावादिका भावमादौ कृत्वा वृद्धिरसंख्यगुणिता. आदिशब्दात्कालद्रव्यक्षेत्राणि गृह्यंते. अयमर्थः—भावाप्रदेशेभ्यः कालतोऽप्रदेशाः पुद्गला असंख्यगुणाः, कालाप्रदेशेभ्यो द्रव्याप्रदेशा असंख्यगुणाः, द्रव्याप्रदेशेभ्यः क्षेत्राप्रदेशा असंख्यगुणा इति. ' तोत्ति ' तस्मात्सप्रदेशानां पुद्गलानां क्षेत्रादिका क्षेत्रमादौ कृत्वा वैपरीत्येन क्रमशो विशेषपरिवृद्धिर्बोधव्या. क्षेत्रतः सप्रदेशेभ्यो द्रव्यतः सप्रदेशा विशेषाधिकाः.

तथा चतुरणुकस्कंधानां चत्वारो राशयः, एक एकैकनभःप्रदेशावगाढानां, द्वितीयो द्विद्विनभःप्रदेशावगाढानां, तृतीयस्त्रित्रिनभःप्रदेशावगाढानां, चतुर्थस्तु चतुश्चतुर्नभःप्रदेशावगाढानां स्कंधानां, एवं पंचाणुकस्कंधानां पंच राशयो यावदसंख्याताणुकस्कंधानां क्षेत्रावगाहापेक्षयाऽसंख्याता राशयः. अनंताणुकस्कंधानां तु क्षेत्रावगाहापेक्षयानंता राशयः. सकललोकाकाशप्रदेशाग्रस्यासंख्यातस्यैव सर्वत्र भणनादिति. एवं च सति ये द्व्यणुकादयोऽनंताणुकांताः स्कंधा एकैकनभःप्रदेशावगाहिनो राशयस्ते सर्वे क्षेत्रतः सप्रदेशा इति ॥ २२ ॥ शेषत्वं भावयन्नाह—

॥ मूलम् ॥—ते पुण दुपएसोगा—हणाइया सवपुग्गला सेसा ॥ ते अ असंखिज्जगुणा । अवगाहणठाण बाहुआ ॥ २३ ॥ व्याख्या—ते पुनर्द्विप्रदेशावगाहनादिकाः ' सवपुग्गलत्ति ' समस्ता द्व्यणुकादयोऽनंताणुकाः स्कंधाः शेषाव्यतिरिक्ताः क्षेत्राप्रदेशपुद्गलेभ्य इत्यस्याध्याहारः, ते पुनः क्षेत्रतः सप्रदेशाश्च संख्यातगुणा. अवगाहनास्थानानां बाहुल्यात्. अयमाशयः—परमाण्वादीनामनंताणुकस्कंधानामपि पुद्गलानामेकैकनभःप्रदेशलक्षणानामेकमेवावगाहनास्थानं, क्षेत्राप्रदेशानां क्षेत्रतः सप्रदेशानां द्व्यादिनभःप्रदेशप्रभृतीन्यसंख्यातनभःप्रदेशपर्यंतान्यसंख्यातानि अवगाहनास्थाना-

केचित्सूक्ष्मपरिणामतयैकैकनभःप्रदेशावगाहिनः. एवं चतुरणुकस्कंधा अपि. केचिच्चतुश्चतुर्नभःप्रदेशावगाहिनः, केचिद् द्विद्विनभःप्रदेशावगाहिनः, केचित्त्वेकैकनभःप्रदेशावगाहिन इति. अनया दिशा पंचाणुकषडणुकादयोऽनंताणुकांताः स्कंधा एकैकनभःप्रदेशावगाहिनोऽपि लभ्यंत इति. तथा च सति द्व्यणुकादीनामनंताणुकांतानां क्षेत्रतोऽप्रदेशानां प्रतिप्रदेशं परमाणुवृद्धिस्थानमेकैक एव राशिरिति ॥ २१ ॥ अथ क्षेत्रतः सप्रदेशानामसंख्यगुणतामाह—

॥ मूलम् ॥—इत्तो खित्तापएसेण । चेव सपएसया असंखगुणा ॥ एगपएसोगाढो । मुत्तुं सेसावगाहणया ॥ २२ ॥ व्याख्या—' इत्तोत्ति ' एभ्यः क्षेत्राप्रदेशेभ्यः सकाशात् क्षेत्रतः सप्रदेशा असंख्येयगुणाः, यत एकैकप्रदेशावगाढान् मुक्त्वा ' सेसावगाहणयत्ति ' द्व्यादिनभःप्रदेशावगाहिनः स्कंधाः सर्वेऽपीह गृह्यंते इति. अयमर्थः—द्व्यणुकस्कंधानां क्षेत्रावगाहनापेक्षया द्वे राशी. एक एकैकनभःप्रदेशावगाढानां स्कंधानां, द्वितीयस्तु द्विद्विनभःप्रदेशावगाढानां स्कंधानां, तथा त्र्यणुकस्कंधानां क्षेत्रावगाहनापेक्षया त्रयो राशयः, एक एकैकनभःप्रदेशावगाढानां, द्वितीयो द्विद्विनभःप्रदेशावगाढानां, तृतीयस्तु त्रित्रिनभःप्रदेशावगाढानां स्कंधानां.

लावस्थायित्वेनात्यंतमल्पत्वात्, कालाप्रदेशेभ्योऽसंख्यातगुणा द्रव्याप्रदेशा इति ॥ १९ ॥

॥ मूलम् ॥—इत्तो असंखगुणिया । हवंति खित्तापएसिया समए ॥ जं ते ता सव्वेवि य । अपएसा खित्तओ अणवो ॥ २० ॥ व्याख्या—' इत्तोत्ति ' इतो द्रव्याप्रदेशेभ्यः क्षेत्राप्रदेशिका असंख्यातगुणा भवंति, तस्मात्ते परमाणवः ' ता ' इति तावदर्थे, स च क्रमोपन्यासे. वक्ष्यमाणगाथोक्तद्विप्रदेशादिद्रव्यापेक्षैकनभःप्रदेशावगाहितया सर्वेऽपि क्षेत्रतोऽप्रदेशा एवेति. न ह्येकः परमाणुर्बादरपरिणामोऽपि स्यादनेकनभःप्रदेशान् व्याप्नोति ॥ २० ॥

॥ मूलम् ॥—दुपएसियाइएसु वि । पएसपरिवड्ढिएसु ठाणेसु ॥ लब्भइ इक्किकोवि य । रासी खित्तापएसाणं ॥ २१ ॥ व्याख्या—' दुपएत्ति ' प्रदेशशब्दः परमाणुपर्याय इह गृह्यते, ततो द्विप्रदेशादिकेष्वपि स्कंधेषु प्रदेशपरिवर्धितेषु स्थानेषु एकाद्येकोत्तरेण परमाणुः परिवर्धते. तेषु क्षेत्राप्रदेशानामेकैक एव राशिर्लभ्यते, अयमर्थः—व्यणुकस्कंधा बादरपरिणामतया केचिद् द्विद्विप्रदेशावगाहिनः, केचित्तु सूक्ष्मपरिणामतयैकनभःप्रदेशावगाहिन इति. एवं त्र्यणुकस्कंधाः केचिद्बादरपरिणामतया त्रित्रिनभःप्रदेशावगाहिनः, केचिद्बादरसूक्ष्मपरिणामतया द्विद्विनभःप्रदेशावगाहिनः,

त्वं प्रथयन्नाह—

॥ मूलम् ॥—सइवि असंखिज्जपए—सियाण तेसिं असंखभागत्ते ॥ बाहुल्लं साहिज्जइ । फुम्मवसेसाहिं रासीहिं ॥ १८ ॥ व्याख्या—' सइत्ति ' सत्यप्यसंख्यानप्रदेशकेभ्यः स्कंधेभ्यः ' तेसिंति ' परमाणूनामसंख्येयभागत्वे बहुत्वं कथ्यते निश्चितमवशेषराशिभ्यां संख्यानप्रदेशिकानंतप्रदेशिकाभिधानाभ्यामिति. अयमभिप्रायः—संख्यातप्रदेशकराशेरपेक्षया सूत्रे संख्यानभागवर्तित्वं परमाणूनामुक्तं, ततोऽवसीयते तेषां बहुत्वं, अन्यथा संख्यातप्रदेशिकराशेरपेक्षयाऽसंख्येयभागे अनंतभागे वा ते परमाणवोऽभविष्यन्निति परमाणूनां स्वरूपतो बहुत्वं प्रसाध्येयुः ॥ १८ ॥ इदानीं कालाप्रदेशिकेभ्योऽसंख्यातत्वमाह—

॥ मूलम् ॥—जेणिक्कारासिणोच्चिय । असंखभागेण सेसरासीणं ॥ तेणासंखिज्जगुणा । अणवो कालापएसेहिं ॥ १९ ॥ व्याख्या-' जेणिक्कत्ति ' येनैकराशेरेवासंख्यानप्रदेशकस्कंधराशेरेव, संख्यातप्रदेशकस्कंधराशेस्तु संख्यातभागे वर्तते, संख्यातभागस्य च विवक्षया पूर्वोक्तयुक्त्या च नात्यंतमल्पतेति, न कालतः सप्रदेशेषु च वृत्तिमतामणूनां बहुत्वात्, कालाप्रदेशानां च समयमात्रका-

ताः संति, तथापि तेभ्योऽनंतप्रादेशिकस्कंधेभ्यः प्रदेशार्थतया परमाणवोऽनंतगुणाः सूत्रे उक्ताः. सूत्रं चेदं—सव्वथोवा अणंतपएसिया खंधा दव्वठयाए, ते चेव पएसठयाए अणंतगुणा परमाणुपुग्गला दव्वठयाए अणंतगुणा संखिज्जपएसिया खंधा दव्वठयाए संखिज्जगुणा असंखिज्जपएसिया खंधा दव्वठयाए असंखिज्जगुणा. ते चेव पएसठयाए असंखगुणत्ति ॥ १६ ॥

॥ मूलम् ॥—संखिज्जइमे भागे । संखिज्जपएसियाण वट्टंति ॥ नवरमसंखिज्जपए—सियाण भागे असंख इमे ॥ १७ ॥ व्याख्या—' संखित्ति ' संख्याताः प्रदेशाः परमाणवो येषां स्कंधानां ते तथा तेषां संख्येयतमे भागे वर्तते परमाणव इति. असंख्याताः प्रदेशाः परमाणवो येषां ते तथा तेषां चासंख्येयतमे भागे वर्तते परमाणव इति उक्तसूत्रप्रामाण्यात्. अयमाशयः—यथा किल कल्पनया शतस्य संख्येयतमो भागो विंशतिः, शतस्यैवासंख्येयतमो भागो दश, शतस्यैवानंततमो भागः पंच. एवमिहानया दिशा द्व्यणुकादिस्कंधेभ्यः प्रभृति संख्याताणुकस्कंधान् यावद्यः संख्याताणुकस्कंधराशिः, तदपेक्षया परमाणवः संख्येयतमे भागे वर्तंत इति, असंख्याताणुकस्कंधराश्यपेक्षया त्वसंख्येयभागे इति. परमार्थतस्तु परमाणूनामप्यनंतत्वं वक्ष्यत इति ॥ १७ ॥ अथ परमाणूनां बहु-

भ्यतोऽप्रदेशा असंख्यातगुणाः सिद्धा भवंति. के पुनस्तेऽत आह—परमाणवः, कथं ते बहवस्तदुच्यते ॥ १४ ॥

॥ मूलम् ॥—अणु १ संखिज्जपएसि य २ । असंख ३ अणंतपएसिया ४ चेव ॥ चउरो चिय रासीपुग्ग—लाण लोए अणंताणं ॥ १५ ॥ व्याख्या—' अणुत्ति ' परस्परासंबंधस्वभावानां परमाणूनामेको राशिः १, द्व्यणुकत्र्यणुकादीनामुत्कृष्टसंख्याताणुकांतानां स्कंधानां सर्वेषामपि संख्याताणुकव्यपदेशभाजां द्वितीयो राशिः २, जघन्यासंख्यातगुणकादीनामेकाद्येकोत्तरगुणवृद्धानामुत्कृष्टासंख्याताणुकांतानां सर्वेषामप्यसंख्याताणुकव्यपदेशभाजां तृतीयो राशिः ३, जघन्यानंताणुकादीनामेकाद्येकोत्तरगुणवृद्धानामुत्कृष्टासंख्याताणुकांतानां स्कंधानां सर्वेषामप्यनंताणुकव्यपदेशद्विगुणकालकादीनां परिणामानंत्यभाजां चतुर्थो राशिः. एत एव च राशयोऽनंतानां पुद्गलानां लोके चतुर्दशरज्ज्वात्मके भवंति ॥ १५ ॥

॥ मूलम् ॥—तब्भाणंतेहिंतो । सुत्तेणंतप्पएसिएहिंतो ॥ जेण पएसठाए । भणिया अणवो अणंतगुणा ॥ १६ ॥ व्याख्या—' तब्भत्ति ' तेषु चतुर्षु राशिषु यद्यप्यनंतप्रदेशिकाः स्कंधा अनं-

॥ मूलम् ॥—एवं जो सवोवि य । परिणामो पुग्गलाण इह समए ॥ तं तं पडुच्च एसिं । कालेणं अप्पएसत्तं ॥ १२ ॥ व्याख्या—एवं जोत्ति ' एवमुक्तेन प्रकारेण यः सर्वोऽपि च परिणामः पर्यायांतरभवनं पुग्गलाणंति ' परमाणूनां स्कंधानां चेहेति जिनप्रवचने वर्णितः, तं तं परिणाममाश्रित्य ' एसिंत्ति ' पुद्गलानामेव समयस्थितिकानां कालेनाप्रदेशत्वं ज्ञेयमिति ॥ १२ ॥ तथा च सति किं सिद्धमित्यत आह—

॥ मूलम् ॥—कालेण अप्पएसा । एवं भावापएसएहिंतो ॥ हुंति असंखिज्जगुणा । सिद्धा परिणामबाहुल्ला ॥ १३ ॥ व्याख्या—' कालेणत्ति ' ये भावतोऽप्रदेशा एकगुणकालकादयो ये च द्विगुणकालकादयोऽनंतगुणकालकांतादीन् यावद्भावतः सप्रदेशास्ते सर्वे कालत एकसमयस्थितिका अप्रदेशाः. एवमिति अनेन व्याख्यानेन भावाप्रदेशेभ्यः कालाप्रदेशा एकगुणकालकद्विगुणकालकादीनां परिणामानंत्यात् पुद्गला असंख्यातगुणाः सिद्धा भवंतीति ॥ १३ ॥

॥ मूलम् ॥—इत्तो दवाएसेण । अप्पएसा हवंति असंखगुणा ॥ के पुण ते परमाणू । कह ते बहुयत्ति ते सुणसु ॥ १४ ॥ व्याख्या—' इत्तोत्ति ' इतोऽनंतरोक्तेभ्यः कालाप्रदेशेभ्यो द्र-

षु पुद्गलभेदेषु स्थानांतरगमनं प्रतीत्य कालेन कालाप्रदेशानां मार्गणा, अयमभिप्रायः—यथा द्रव्यपरिणाममाश्रित्य परमाणवो द्रव्यतोऽप्रदेशाः, तथा एकैकनभःप्रदेशावगाहितायां सत्यां स्वस्वक्षेत्रममुंचतः क्षेत्रतोऽप्रदेशाः पुद्गला उच्यंते, तथा यदा यदा तु स्वस्वक्षेत्रांतरेषु पुद्गलाः संचरंति, प्रतिस्थानं च समयमनेकमवतिष्ठंते, तदा तदा कालतोऽप्रदेशाः पुद्गला व्यपदिश्यंत इति ॥ १० ॥ यथा क्षेत्रत एवमवगाहनादिनोपीत्येतदुच्यते—

॥ मूलम् ॥—संकोयविकोयंपि हु । पडुच्च उग्गाहणाइ एमेव ॥ तह सुहुमबायरथिरे—यरे य सद्दाइपरिणामं ॥ ११ ॥ व्याख्या—' संकोयत्ति ' अवगाहनायाः संकोचं विकोचं च प्रतीत्य कालाप्रदेशाः स्युः, अयमभिप्रायः—ये ये परमाणुसंख्यापेक्षया स्तोकनभःप्रदेशावगाहिनो भूत्वा समयमेकं स्थित्वा पुनरन्यनभःप्रदेशावगाहिनो भवंति, तदा संकोचे विकोचेऽपि सति पुद्गलस्कंधाः कालतोऽप्रदेशाः स्युः. तथा सूक्ष्मबादरस्थिरास्थिरशब्दमनःकर्मादिपरिणामं च प्रतीत्य कालतोऽप्रदेशाः स्युः. अयमभिप्रायः—ये सूक्ष्मबादरादिपरिणाममापन्नाः पुद्गलस्कंधा यदा समयमेकमवतिष्ठंति तदा ते कालतोऽप्रदेशाः स्युः ॥ ११ ॥ ततश्च—

भिहितास्तथाप्यनंतस्यानंतभेदत्वात्, वक्ष्यमाणैकगुणद्रव्यराशि १ संख्यातगुणद्रव्यराशि २ असंख्यातगुणद्रव्यराशि ३ अनंतगुणद्रव्यराशि ४ रूपराशिचतुष्टये एकगुणकालकत्वादिद्रव्यराशेरपेक्षयानंतगुणकालकादिद्रव्यराशेः समग्रस्यापि अनंतभागवृद्धत्वेनाभिहितत्वात, तच्चेह लघु अनंतत्वं ज्ञेयं. ततः कालाप्रदेशानां नानंतगुणत्वं, अपि त्वसंख्यातगुणत्वमेवेति ॥ ८ ॥

॥ मूलम् ॥—एवं ता भावमिणं । पडुच्च कालापएसया सिद्धा ॥ परमाणुपुग्गलाइसु । दव्वे वि हु एस चेव गमो ॥ ९ ॥ व्याख्या—'एवंत्ति' एवं तावद्भावं वर्णगंधादिपरिणाममिममभिहितस्वरूपमेकाद्यनंतगुणस्थानवर्तिनमित्यर्थः, प्रतीत्याश्रित्य कालतोऽप्रदेशाः पुद्गलाः सिद्धाः स्वरूपनिरूपणेन प्रतिष्ठिताः. द्रव्येऽपि द्रव्यपरिणाममप्याश्रित्य परमाण्वादिषु एवं भावपरिणामाभिहित एव प्रकारो ज्ञेयः. अयमभिप्रायः—ये परमाणवः परस्परमसंपृक्तास्ते द्रव्यतोऽप्रदेशा उच्यंते इति. ॥ ९ ॥ अथ क्षेत्राप्रदेशस्वरूपमाह—

॥ मूलम् ॥—एमेव होइ खित्ते । एगपएसावगाहणाईसु ॥ ठाणंतरसंकंति । पडुच्च कालेण मग्गणया ॥ १० ॥ व्याख्या—एवमेव द्रव्यपरिणामवद्भवति क्षेत्रे क्षेत्रमधिकृत्य एकप्रदेशावगाढादि-

धिका अभिधीयंते ततो भावप्रदेशेभ्यः कालप्रदेशा अनंतगुणाः प्राप्नुवंति. यतोऽनंतेषु एकगुणकालकद्विगुणकालकत्रिगुणकालकादिषु अनंतगुणकालकपर्यवसानेषु गुणस्थानकेषु राशयोऽप्यनंता भवंति. अथवासंख्यातगुणत्वमिष्यते इति ॥ ७ ॥ अत्रोत्तरं—

॥ मूलम् ॥—जम्हइ एगगुणाणवि—णंतभागंमि जं अणंतगुणा ॥ तेणासंखगुणच्चिय । हवंति नाणंतगुणियत्तं ॥ ८ ॥ व्याख्या—'जम्हइत्ति' एकगुणकालकत्वादीनामपि अनंतगुणकालकत्वादयोऽनंतभागे एव वर्तंते, तेन भावप्रदेशेभ्यः कालप्रदेशाः परमाणुस्कंधा असंख्यातगुणा एव भवंति. न त्वनंतगुणा इति. अयमभिप्रायः—एकगुणकालकात्प्रभृति एकाद्येकोत्तरेण गुणवृद्ध्या उत्कृष्टसंख्यातगुणकालं यावत् संख्यातानि गुणस्थानकानि लभ्यंते. ततः परमेकेनापि गुणेन वृद्धौ जघन्यासंख्यातगुणकालकपुद्गलस्कंधो व्यपदिश्यते. ततःप्रभृत्येकाद्येकोत्तरेण गुणवृद्ध्या उत्कृष्टसंख्यातगुणकालं यावदसंख्यातानि गुणस्थानकानि लभ्यंते. ततः परमेकेनापि गुणेन वृद्धौ जघन्यानंतगुणकालकपुद्गलस्कंधो व्यपदिश्यते. ततः प्रभृत्येकाद्येकोत्तरेण गुणवृद्ध्योत्कृष्टानंतगुणकालकं यावदनंतानि लभ्यंते. तथा च सति यदनंतगुणकालकत्वादीनां पुद्गलस्कंधानामनंतराशयो-

वेणं जावणंतगुणा ॥ ५ ॥ व्याख्या—भावतो येऽप्रदेशास्ते कालतो द्विविधा अपि भवंति; अप्रदेशाः सप्रदेशाश्चेत्यर्थः. तत्र एकसमयस्थितिका अप्रदेशाः, द्व्यादिसमयस्थितयस्तु एकादेकोत्तरेण यावदसंख्यातसमयस्थितयः, ते सर्वे सप्रदेशा इत्यभिप्रायः. तथा भावेन द्विगुणादयोऽनंतगुणांता एवमिति द्विधा, कालतः सप्रदेशा अप्रदेशाश्च भवंतीत्यर्थः ॥ ५ ॥ ततश्च—

॥ मूलम् ॥—कालापएसगाणं । एवं इक्किक्क हवइ रासी ॥ इक्कक्के ठाणंमि । एगगुणकालयाईसु ॥ ६ ॥ व्याख्या—' कालत्ति ' एकगुणकालिकद्विगुणकालिकादिषु गुणस्थानकेषु मध्ये एकैकस्मिन् गुणस्थानके कालाप्रदेशानामेकैकराशिर्भवति. अयमर्थः—एकगुणकादय एकाद्येकोत्तरया गुणवृद्ध्या अनंतगुणकालकांताः प्रतिगुणस्थानमनंताः पुद्गलाः संति. एवमेकगुणनीलादयोऽपि लभ्यंते इति. ततश्चानंतत्वाद्गुणस्थानकराशीनामनंता एव कालाप्रदेशराशयो भवंतीति ॥६॥ अत्र प्रेरकः—

॥ मूलम् ॥—आहाणंतगुणत्त—मेवं कालापएसयाणंति ॥ जमणंतगुणठाणेसु । हुंति रासीवि हु अणंता ॥ ७ ॥ व्याख्या—' आहत्ति ' एवमिति यदि प्रतिगुणस्थानकं कालाप्रदेशा अ-

भवइ परिणामबाहुल्ला ॥४॥ व्याख्या–' इत्तोत्ति ' इतो भावप्रदेशेभ्यः कालाप्रदेशा असंख्यगुणा भवेयुः, कुतो हेतोः? उच्यते—परिणामानां बहुत्वात्. अयमर्थः—यो हि यस्मिन् समयेऽन्यद्वर्णगंधरसस्पर्शसंघातभेदात् सूक्ष्मबादरत्वादिपरिणामांतरमापन्नः, स तस्मिन् समये तदपेक्षया कालतोऽप्रदेश उच्यते. तत्र वर्णाः पंच, गंधौ द्वौ. रसाः पंच. स्पर्शा अष्टौ, एतेषु च विंशतौ पदेषु प्रतिपदं एकगुणकालकादयोऽनंतगुणकालकपर्यवसाना एकाद्येकोत्तराणामनंता भेदाः पुद्गलानां प्राप्यंते. तेषु च सर्वेषु भेदेषु प्रतिभेदं यदा एकसमयस्थितिकास्तदा कालतोऽप्रदेशा भवंति. तथा विसकलितानां परमाणूनामेकपुद्गलस्कंधतया परिणमनं संघातः, एकद्रव्यात्परमाणूनां विघटनं भेदः. एकस्मिन्नपि नभःप्रदेशे द्व्यादीनां परमाणूनामवस्थानं सूक्ष्मत्वं. सूक्ष्मपरिणामस्य द्रव्यस्य परमाणुसंख्यानतिक्रमेण प्रतिसमयमनेकानामंतःप्रदेशव्यापितया भवनं बादरत्वं. एतेष्वपि परिणामांतरेषु यदा यदा पुद्गला एकसमयस्थितिकाः प्राप्यंते, तदा तदा कालतोऽप्रदेशा उच्यंते. इति प्रतिपरिणामं कालाप्रदेशसंभवात्तद्बहुत्वमिति. एतदेव भाव्यते—

॥ मूलम् ॥–भावेण अप्पएसा । जे ते कालेण हुंति दुविहावि ॥ उगुणाइत्तवि एवं । भा-

ला हुंति ॥ २ ॥ व्याख्या—' दव्वेणंति ' अप्रदेशाः पुद्गला भवंतीति सर्वत्र योज्यं. तत्र द्रव्यतः परस्परासंपृक्ताः परमाणवोऽप्रदेशाः पुद्गला भवंति, क्षेत्रत एकनभःप्रदेशव्यापिनोऽप्रदेशाः पुद्गला भवंति. कालत एकसमयस्थितयोऽप्रदेशाः पुद्गला भवंतीति. भावाप्रदेशस्वरूपनिरूपणपूर्वकं तदल्पबहुत्वमाह—

॥ मूलम् ॥—भावेणं अप्पएसा । एगगुणा जे हवंति वण्णाइ ॥ तच्चिय थोवा जं गुण—बाहुल्लं पायसो दव्वे ॥ ३ ॥ व्याख्या—' भावेणंति ' भावत एकवर्णा इति. वर्णादिभिः पुद्गला अप्रदेशा भवंति. अयमर्थः—एकगुणकालकैकगुणपीतकादयो वर्णतः. एकगुणसुरभिप्रभृतयो गंधतः, एकगुणतिक्तप्रभृतयो रसतः, एकगुणरूक्षैकगुणस्निग्धप्रभृतयः स्पर्शतश्च पुद्गला भावाप्रदेशा भवंतीत्यर्थः. त एव ' थोवत्ति ' सर्वस्तोकाः, यतो द्रव्ये प्रायशो गुणाः प्राचुर्येण भवंति. अयमर्थः—द्रव्येण प्रायेण द्व्यादिगुणा अनंतगुणांताः कालत्वादयः स्थानबाहुल्यादनंतगुणा भवंति. एकगुणकालकत्वादयस्त्वेकैकस्थानवर्तित्वेनाल्पा इति भावः ॥ ३ ॥

॥ मूलम् ॥—इत्तो कालाएसेणं । अप्पएसा भवे असंखगुणा ॥ किं कारणं पुण भवे ।

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीपुद्गलषट्त्रिंशिका सटीका प्रारभ्यते ॥

( कर्त्ता—श्रीरत्नसिंहसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

॥ मूलम् ॥—वुच्छं अप्पाबहुयं । दव्वा १ खेत्त २ द्ध ३ भावओ वावि ॥ अप्पएससप्पएसाणं । पुग्गलाणं समासेणं ॥ १ ॥ व्याख्या—अथ पंचमे शतेऽष्टमोद्देशके पुद्गलप्रदेशनिरूपणं. द्रव्यतः क्षेत्रतः कालतो भावतश्च सप्रदेशानां पुद्गलानां सूत्रोक्ताल्पबहुत्वभावनार्थं गाथाप्रपंचो वृद्धोक्तो विव्रियते, स चायं—द्रव्यतः सप्रदेशानामप्रदेशानां च, क्षेत्रतः सप्रदेशानामप्रदेशानां च, 'अद्धत्ति' कालतः सप्रदेशानामप्रदेशानां च, भावतः सप्रदेशानामप्रदेशानां च पुद्गलानामेकाणुकादिद्रव्याणामल्पबहुत्वं संक्षेपेण वक्ष्ये इति. अथाप्रदेशस्वरूपमाह—

॥ मूलम् ॥—दव्वेणं परमाणू । खित्तेणेगपएसमोगाढा ॥ कालेणेगसमइया । अपएसा पुग-

॥ श्रीजिनाय नमः ॥

# ॥ श्रीपुद्गलषट्त्रिंशिका सटीका ॥

( कर्ता—श्रीरत्नसिंहसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत—२४४०. विक्रमसंवत्—१९७०. सने—१९१४.

किं रु.—०—८—०

श्रीजैनभास्करोदय प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

# ॥ श्रीविविधपयन्नावचूरिटीका ॥



छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत—२४३८. विक्रमसंवत्—१९६९. सने—१९१२.

किं रु.-१-८-०



 जामनगर श्रीजैनभास्करोदयछापखानामां छाप्युं.

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीविविधपयन्नावचूरिटीका प्रारभ्यते ॥

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

नमः श्रीसर्वज्ञाय, चतुःशरणविषमपदविवरणं—सावज्ज० सह अवद्येन पापेन वर्तते इति सावद्याः, युज्यंते इति योगा मनोवाक्कायव्यापाराः, सावद्याश्च ते योगाश्च सावद्ययोगाः, विरमणं विरतिस्तेषां विरतिस्तद्विरतिः, सामायिकेन क्रियते इत्यध्याहार्यं, उत्कीर्तनमुत्कीर्तना सा चतुर्विंशतिस्तवेन क्रियते, गुणा ज्ञानदर्शनचारित्राद्यास्ते विद्यंते येषां ते गुणवंतस्तेषां प्रतिपत्तिर्भक्तिर्गुणवत्प्रतिपत्तिः, सा वंदनकेन क्रियते, स्खलनं स्खलितमात्मनः सातिचारकरणं तस्य निंदनं निंदना न पुनः करिष्यामीत्यभ्युपगमनं तत्प्रतिक्रमणेन क्रियते, चिकित्सनं चिकित्सा व्रणस्यातीचाररूपस्यावव्रणस्य चिकित्सा व्रणचिकित्सा, सा कायोत्सर्गेण क्रियते, गुणा विरत्यादयो, धरणं धारणा तेषां धारणा, सा प्रत्याख्यानेन क्रियते, चेति समुच्चये, उक्तः सामायिकाद्यर्थः, एतेषां षण्णां अर्थं च

गाथाषट्कमाह—चारि० चयस्य रिक्तीकरणाच्चारित्रं, सूत्रस्य सूचकत्वात् चारित्रस्य चारित्राचारस्य, पणिहाणेत्यादि अष्टविधस्य विशोधनं विशोधिः, चारित्रस्य विशोधिश्चारित्रविशोधिः क्रियते. केन समभावेन सामायिकलक्षणेन, किलेति संभावनायां संभावयति, इहयत्ति इहैव जिनशासने. न शाक्यादिदर्शने, सावद्याः सपापा इतरे च निरवद्याश्च इतरे च सावद्येतरास्ते च ते योगाश्च सावद्येतरयोगास्तेषां वर्जना च आसेवना च वर्जनासेवने, ताभ्यां वर्जनासेवनतः यथासंख्येन सावद्यानां वर्जनतः, इतराणां त्वासेवनतो विशोधिस्तेन क्रियते इति तात्पर्यार्थः ॥ २ ॥ उक्ता सामायिकेन चारित्राचारशुद्धिः, दर्शनाचारशुद्धिमाह—दस० दृश्यंतेऽवबुध्यंते यथावस्थिततत्वरूपेण पदार्था अनेनेति दर्शनं सम्यक्त्वं, तस्याचारो दर्शनाचारः, निस्संकियेत्याद्यष्टविधस्तस्य विशोधिश्चतुर्विंशतेरात्मनां जीवानां तीर्थंकरसंबंधिनां स्तवनं स्तवः क्रियते यत्र स चतुर्विंशत्यात्मस्तवस्तेन चतुर्विंशत्यात्मस्तवेन, अत्यद्भुता अतिशयेन लोकोद्योतकरादयो ये गुणास्तेषां यदुत्कीर्तनं वर्णनं तद्रूपेण जिनवरेंद्राणां ॥ ३ ॥ ज्ञानाचारशुद्धिमाह—नाणा० काले विणए इत्यादिकोऽष्टविधो ज्ञानाचारो गृहीतः, आदिशब्दाद् दर्शनाचारचारित्राचारग्रहः, ज्ञानमादौ येषां ते ज्ञानादिकास्त एते ए-

व गुणा इत्यर्थः, तत्संपन्नत्ति तैर्ज्ञानादिगुणैः संपन्ना युक्तास्तत्संपन्नास्तेषां प्रतिपत्तिर्भक्तिस्तस्याः करणं तस्मात्तत्संपन्नप्रतिपत्तिकरणाद्विनयकरणादित्यर्थः, केन? वंदनकेन, कथं? विधिना विधिवद् द्वात्रिंशद्दोषरहितया पंचविंशत्यावश्यकपरिशुद्धतया च क्रियते शोधिरिति तेषां ज्ञानाचारादीनां, तुः पुनरर्थे, चारित्राचारदर्शनाचारयोः शोधितयोरपि विशेषेण शोधनार्थं ॥ ४ ॥ ज्ञानादीनां गाथाद्वयेन शुद्धिमाह—खलि० चरणा० स्खलितस्य व्रतविषयेऽतिक्रमादिना संजातस्यापराधस्य तेषां ज्ञानाचारादीनां पुनरपि प्रतिषिद्धकरणकृत्याकरणाश्रद्दधानविपरीतप्ररूपणादिषु विधिना सूत्रानतिक्रमेण यन्निंदना दुष्टं मयैतत्कृतमिति परसाक्षिकमात्मदोषाविःकरणं, न पुनः करिष्यामीति यदुररीकरणं, तस्माद्दोषजातान्निवर्तनं तत्प्रतिक्रमणमुच्यते, अतः कारणात्तेन प्रतिक्रमणेन तेषामपि च ज्ञानाचारादीनां क्रियते शोधिः ॥ ५ ॥ चरणमतिगच्छंत्यतिक्रामंतीति चरणातिगास्ते आदौ येषां ते चरणातिगादिका अतिचारा इति हृद्यं, तेषां यथाक्रमं यथाक्रमप्राप्तेन पंचमप्रायश्चित्तेन द्रव्यभावभेदेन द्विधा व्रणस्तत्र द्रव्यव्रणः कंटकादिः, भावव्रणस्त्वतिचारशल्यरूपस्तस्य या चिकित्सा प्रतीकारः सैव रूपं यस्य सः, तेन व्रणचिकित्सारूपेण तत्प्रतीकारकारणत्वात्, प्रतिक्रमणेन अशुद्धानां अ-

र्धशुद्धानां वा तथैव शुद्धिः क्रियते, कायोत्सर्गेण ते शोध्यंत इत्यर्थः, कायोत्सर्गस्य महन्निर्जराकारणत्वात् ॥ ६ ॥ नाणाईआ ४ ज्ञाननयप्राधान्यं, चरणाइया ६ क्रियानयप्राधान्यं, वर्णिता आचारत्रयशुद्धिः, अथ चतुर्थपंचमाचारावाह—गुण० गुणा विरत्यादय उत्तरोत्तरगुणास्तेषां धारणं गुणधारणं तदेव रूपं यस्य स तेन अनागतादिदशविधेन सप्तविंशतिविधेन वा प्रत्याख्यानेन तप आचारातिचारस्य, बारसविहंमिवि तवेत्यादिकस्य शुद्धिः क्रियते. विशेषेणेरयति प्रवर्तयत्यात्मानं तासु तासु क्रियास्विति वीर्यमुत्साहविशेषस्तच्च पंचधा. यदाह—भवविरियं गुणविरियं । चरित्तविरियं समाहिविरियं च ॥ आयविरियंपि य तहा । पंचविहं वीरियं होइ ॥ १ ॥ तस्याचारो वीर्याचारः, अणिगूहियेत्यादिकस्तस्य सर्वैरपि षड्भिरपि शुद्धिः क्रियते इत्यर्थः ॥ ७ ॥ सर्वजिनगुणोत्कीर्तनगर्भं मंगलभूतं गजादिस्वप्नसंदर्भमाह—गय० तत्र जिननननी चतुर्दंतं प्रक्षरन्मदनदीसुंदरं गोक्षीरधारासोदरमुच्चैस्तरं जंगमं रजताचलमिव गजकलभं यदपश्यत्तदतुलबलपराक्रमनिधिं गरीयसामपि गुरुं पवित्रं पुत्रं सूचयति ॥ १ ॥ यच्च वर्णतः शंखसुहृदं प्रौढककुदमेवमादि ॥ ८ ॥ आसन्नोपकारित्वात् श्रीवीरनमस्कारमाह—अम० उपक्रमकृतेनापमृत्युना न म्रियंत इत्यमरास्तेषामिंद्राः, अमरेंद्रनरेंद्र-

मुनीन्द्रैर्वंदितं वंदित्वा महावीरं, कुशलो मोक्षस्तमनुबध्नातीत्येवंशीलं कुशलानुबंधिबंधुरं मनोज्ञं अध्य-
यनं शास्त्रं कीर्तयिष्यामि ॥ ९ ॥ अध्ययनार्थाधिकारानाह—चउ० चतुर्णां अर्हत्सिद्धसाधुधर्माणां
शरणंगमनं चतुःशरणगमनं १ दुष्टं कृतं दुःकृतं, तस्य गर्हा गुरुसाक्षिकमात्मदोषकथनं २ शोभनं
कृतं सुकृतं, तस्यानुमोदना, भव्यं मयैतत्कृतं ३ चः समुच्चये. एषोऽयं यो भणितुमारब्धो गणस्त्रया-
णां समुदायः, अनवरतं सततं कर्तव्योऽनुसरणीयः कुशलो मोक्षस्तस्य हेतुः कारणमिति कृत्वा ॥
॥ १० ॥ प्रथमाधिकारमाह—अरि० अर्हंतः सिद्धाः साधवः केवलिकथितसुखावहो धर्मः, एते च-
त्वारश्चतुर्गतिं हरंतीति सिद्धलक्षणपंचमगतिप्रापणेन चतुर्गतिहरणा यस्मादित्यर्थः, शरणं लभते ध-
न्यः सुकृतकर्मा एतान् ॥ ११ ॥ विविधानेतानाह—अह० अथ शरणं प्रतिपत्ता चतुर्विधसंघस्य अ-
न्यतमो जीवः, जिनेषु भक्तिर्जिनभक्तिस्तस्या भरस्तस्माज्जिनभक्तिभरादुदयं गच्छन् योऽसौ रोमांचः
स एव कंचुको रोमांचकंचुकः, तेन करालोंतरंगशत्रूणां भीषणः प्रहर्षात यत्प्रणतं प्रणामस्तेनोन्मि-
श्रं व्याकुलं यथाभवत्येवं शीर्षं मस्तके कृतांजलिः कृतकरकुड्मलः सन् भणति ॥ ११ ॥ तत्राद्याद-
शकेनाह—राग० द्रव्यभावभेदाद् द्विधा रागः, तत्र द्रव्यरागो हरिद्रादिः, भावरागस्त्रिधा दृष्टिरागो

विषयरागः स्नेहरागः, द्वेषः परद्रोहाध्यवसायः, त एवारयो रागद्वेषारयस्तेषां हंतारः, कर्माष्टकं प्रतीतं, आदिशब्दात्परीषहवेदनोपसर्गग्रहः, ततः कर्माष्टकाद्यरयस्तेषां हंतारः, शब्दरूपरसस्पर्शगंधा विषयाः, क्रोधादिकषायास्त एवारयस्तेषां हंतारोऽर्हंतो जिना मे मम अपारसंसारकारागृहपरिभ्रमणभयातुरस्य समाश्वस्थानतुल्यं शरणं परित्राणं भवत्वित्यर्थः ॥ १३ ॥

राय० राज्यश्रियं अपकृष्यावधूय तथा तप्यते कर्ममलापनयनेनात्मा सुवर्णमिवाग्निना अनेनेति तपस्तस्य चरणं सेवनं दुश्चरं सामान्यसाधुभिः कर्तुमशक्यं, तत्तपोनुचर्य आसेव्य ये केवलश्रियं अर्हंतस्तस्या योग्या भवंतीति, शेषं प्राग्वत् ॥ १४ ॥ थुइ० स्तुतयः सुवन्नुसोमदंसणेत्यादि वंदनं कायिकप्रणामस्तमर्हंतस्तद्योग्या इत्यर्थः. अमरेंद्रनरेंद्राणां पूजां समवसरणादिकां समृद्धिमर्हंतस्तस्या अपि योग्या भवंति, शाश्वतसुखं निर्वाणानंतरं तदप्यर्हंतीत्यर्थः, शेषं पूर्ववत् ॥ १५ ॥ परम० परेषामात्मव्यतिरिक्तानां मनांसि परमनांसि तेषु गतं स्थितं चिंतितमित्यर्थः, तन्मुणंतो जानंतः, योतींद्रमुनींद्राः शक्रादयस्तेषां ध्यानं स्थिराध्यवसायरूपं तदर्हंतीति, धर्मकथां कथयितुमर्हंतस्तस्याः कथनयोग्या ज्ञातार इत्यर्थः. छद्मस्थावस्थायां तु जिनानां धर्मकथानर्हत्वात्, शेषं तथैव ॥

॥ १६ ॥ सव० सर्वजीवानामहिंसा रक्षा तामर्हंति, यदद्भूतमर्हंतं तत्सत्यं वचनं तदेवार्हतः, ब्रह्मव्रतमष्टादशविकल्पमासेवितुं प्ररूपयितुं चार्हतस्ते, शेषं प्राग्वत् ॥ १७ ॥ समोसरणं० सामस्त्येनावस्त्रियते गम्यते संसारभयोद्विग्नैर्जीवैरिति समवसरणमवसृत्यालंकृत्य चतुस्त्रिंशतो बुद्धातिशयान्निषेव्य उपलक्षणत्वाच्च पंचत्रिंशद्वचनातिशयांश्चोपयुज्य धर्मकथां च कथयित्वा ये मुक्तिं यांति यास्यंति याता इत्यवधार्यं, शेषं प्राग्वत् ॥ १८ ॥ एगाए० एकया गिरा वाचा एकेनापि वचनेन अनेकेषां देहिनां प्राणिनामनेकप्रकारेण संदेहं संशयं समुच्छिद्य संशयच्युतिं कृत्वेत्यर्थः, त्रिभुवनमनुशिष्य शिक्षयित्वा अनुशासयंतो वा सम्यक्त्वदेशविरतिसर्वविरतिलक्षणशिक्षाप्रदानेन ते, शेषं प्राग्वत् ॥
॥ १९ ॥ वय० वचनमेवामृतं वचनामृतं क्षुत्पिपासापीडादिदोषनिरसनसमर्थत्वात्, तेन वचनामृतेन भुवनं लोकं निर्वाप्य तस्य तृप्तिमुत्पाद्य निर्वापयंत इत्यर्थः, ये ते अर्हंतः, शेषं प्राग्वत् ॥२०॥
अतीतानागतार्हद्वरणमाह—अच्च० अत्यद्भुतगुणा बुद्धातिशयवचनातिशयप्रातिहार्यलक्षणास्ते विद्यंते येषां ते तथातान्, अत्यद्भुतगुणवतः, निजयश एव शशधरो निजयशःशशधरः, तेन प्रसाधिता मंडिता धवलीकृता दिगंता यैस्ते, तान् निजयशःशशधरप्रसाधितदिगंतान् नियतं शाश्वतं वा

यथाभवत्येवं न आदिर्न चांतो येषां ते अनाद्यनंतास्तान् अर्हतोऽहं शरणं प्रतिपन्नस्तानाश्रित इ-
त्यर्थः. एतेन कलत्रभाविनोऽपि जिना गृहीताः ॥ २१ ॥ तेषां नमस्कारमाह—जघ्नि० जरामरण-
कारणकर्मरहितत्वाज्जघ्निताानि त्यक्तानि जरामरणानि यैस्ते तेभ्यः समाप्तानि संपूर्णानि समस्तानि
वा यानि दुःखानि तैरार्ता रुजा वा पीमितास्ते च ते सत्वाश्च समाप्तदुःखार्तसत्वाः समस्तदुःखार्त-
सत्वा वा तेषां शरणास्तेभ्यस्त्रिभुवनजनानां सुखं ददातीति ते तथा तेभ्यः, सर्वत्र चतुर्थ्यर्थे षष्ठी,
तेन तेभ्योऽर्हद्भ्यो नमो नमस्कारोऽस्तु ॥ २२ ॥ यथाविधि द्वितीयं शरणं करोति तदाह—अ-
रि० अर्हद्वरणेन या मलस्य कर्मरजसः शुद्धिस्तया लब्धः परिशुद्धो निर्मलः सिद्धान्प्रति बहुमानो
भक्तिर्येन स तथा, किंभूतः प्रणतं भक्तिवशान्नम्रीभूतं यच्छिरस्तत्र रचितः कृतः करकुड्मल एव शे-
खरो येन स तथा सहर्षं यथा भवत्येवं भणति ॥ २३ ॥ यच्चायं भणति तद्गाथाषट्केनाह—कम्म०
कर्माष्टकक्षयेण सिद्धाः प्रसिद्धास्ते च तीर्थसिद्धादिभेदेन पंचदशधा, पुनः कथंभूताः? स्वाभाविके
निरावरणेऽनवच्छिन्नप्रवाहे ये ज्ञानदर्शने ताभ्यां समृद्धाः स्फीतिमंतः अर्थ्यंतेऽभिलष्यंते इत्यर्थाः,
तेषां लब्धयः प्राप्तयः, सर्वाश्च ता अर्थलब्धयश्च कृतकृत्यत्वात् सर्वार्थलब्धयो दानाद्याः सिद्धा निष्प-

न्ना येषां ते सिद्धास्तथा ते सिद्धा मम शरणं भवंत्वित्यर्थः ॥ २४ ॥ तिय० त्रैलोक्यस्य चतुर्दशर-
ज्ज्वात्मकलोकस्य यन्मस्तकं सर्वोपरिवर्तिस्थानं सिद्धिक्षेत्रं तस्याप्युपरितनदेशे तिष्ठंतीति, परमपदं
मुक्तिपदं तद्धेतुत्वाच्चारित्रादिक्रियाकलापस्तत्र तिष्ठंतीति ते, तथा अनंतचतुष्टयोपेतत्वात् अचिंत्यसा-
मर्थ्यं जीवशक्तिविशेषो येषां ते, तथा दुष्टाष्टप्रबलकर्मरिपुविजयेन प्रवरशिवपुरप्रवेशतो मंगलरूपाः
सिद्धाः संपन्नाः पदार्था येषां ते तथा, अथवा सांसारिकदुःखविरहितं मंगलभूतं यत्तत्सिद्धिपदं तत्र
तिष्ठंतीति ते तथा ते सिद्धाः शरणं भवंतु, निस्तीर्णसर्वदुःखजातिजातिजरामरणत्वादाबाधारहितत्वा-
च्च सुखेन मुक्तिप्रभवेन प्रशस्ता अव्याकुलाः प्रशस्तसुखा इत्यर्थः ॥ २५ ॥ मूल० मूलस्य संसार-
हेतुकर्मबंधमूलस्य मिथ्यात्वाविरतिकषाययोगरूपशत्रुसंघातस्य क्षये कर्तव्ये प्रतिपक्षा इव वैरिण इव
तज्जयं कृतवंत इत्यर्थः. मूलोत्खातकर्मप्रतिपक्षावलक्षे दृष्टव्यपदार्थे न मूढा अमूढलक्षाः सदोपयुक्त-
त्वात्तेषां, तथा शेषज्ञानिनामविषययुक्तत्वात्सयोगिनामेव सयोगिकेवलिनां प्रति साहश्याः सदापि
सुखसंपूर्णत्वेन तृप्तत्वात्, स्वाभाविकं आत्तं गृहीतं सुखं यैस्ते तथा परमः प्रकृष्टोऽत्यंतं विरामात्कर्म-
भिः सह मोक्षो वियोगो विकटीभावो येषां ते तथा, यदिवा परममोक्षयोगास्ते सिद्धाः शरणं भवं-

त्वित्यर्थः ॥ २६ ॥ पडि० कर्मोपाधिमुक्तत्वात्प्रतिप्रेरिताः क्षिप्ता अनादृताः प्रत्यनीकाः शत्रवो यैः सिद्धत्वात्, यदि वा प्रतिप्रेरिता निराकृताः प्रत्यनीका अभ्यंतरशत्रवो रागाद्या यैस्ते तथा समग्रं संपूर्णं यद् ध्यानं परमलयस्तदेवाग्निस्तेन दग्धं भस्मसात्कृतं भवबीजं ज्ञानावरणीयादि यैस्ते, तथा योगीश्वरैर्गणधरैश्छद्मस्थतीर्थंकरैर्वा तत्सुखमभिलाषुभिः स्मरणीया ध्येयाः शरणीया वा अनुगंतव्याः शरणत्वेन ते, एवं गुणगरिष्ठाः सिद्धास्त्रिसंध्यमपि स्मरणीया इत्यर्थः ॥ २७ ॥ पावि० सदा मुदितत्वात् प्रापित आत्मजीवंप्रति ढौकितः परमानंदो यैस्ते तथा गुणानां ज्ञानदर्शनचारित्ररूपाणां परिपाकप्राप्तत्वान्निष्पंदः सारो येषां ते तथा कर्मोच्छेदनाद्विदीर्णो विदारितः स्फाटितो भवस्य संसारस्य कंदो यैस्ते तथा, केवलोद्योतेन लघुकीकृतौ अल्पप्रभावीकृतौ रविचंद्रौ यैर्यतस्तदुद्योतस्य योजनप्रमितत्वात्, ते तथा निःकषायत्वात् क्षपितं क्षयं नीतं द्वंद्वं संग्रामो यैस्ते तथा. एते एवंविधाः सिद्धाः शरणं भवंतु ॥ २८ ॥ उव० उपलब्धं प्राप्तं परमब्रह्मज्ञानं यैस्ते तथा, अवगतकेवला इत्यर्थः. सर्वलाभाग्रेसरत्वात् लाभेषु दुर्लभो लाभो मुक्तिप्राप्तिर्येषां ते तथा, दुर्लभलाभत्वमेवाग्रैर्भाव्यते—विमुक्तः परित्यक्त इति कर्तव्यतापदार्थेषु संरंभ आटोपो यैस्ते, निष्पन्नसर्वप्रयोजनत्वात्तेषां, भुवनं

सिद्धिशरणप्रतिपत्तुर्लोक·
त्रिभुवनं तदेव गृहं तस्य धरणमवष्टंभनं तत्र स्तंभा इव स्तंभा भुवनस्य
स्य दुर्गतौ पततः स्थिराधारभूतत्वात्तेषामित्यर्थः, निर्गता बहिर्भूता आरंभेभ्यः कृत्यप्रयोजनेभ्यो ये
ते तथा, ते एवंस्वरूपाः सिद्धा मम शरणं भवंतु ॥ २९ ॥

साधुशरणविधिमाह—सिद्ध० नया नैगमादयस्तैरुपलक्षितं यद्ब्रह्मश्रुतज्ञानं द्वादशांगं त·
स्य नयब्रह्मणो ये हेतवः कारणभूताः साधुगुणा विनयादयो विनयगुणसंपन्नस्यैव येनान्यान्यगुणा·
वाप्तिः, तेषु नयब्रह्महेतुषु साधुगुणेषु जनित उत्पादितोऽनुरागो बहुमानो यस्य स नयब्रह्महेतुसा·
धुगुणजनितानुरागः, शरणं प्रतिपन्नाः, केनास्यानुरागः कृत इत्याह—सिद्धशरणेन मेदिन्यां मि·
लत् लुठत् सुप्रशस्तं भक्तिभरभासुरमस्तकं यस्य स मेदिनीमिलत्सुप्रशस्तमस्तकः गुरुपादार्पितमस्त·
क इत्यर्थः. स एवंविधः साधुगुणरागी भूतलन्यस्तमौलिरिदं वक्ष्यमाणं भणति ॥ ३० ॥ यदयमा·
चष्टे तद्भवभिर्गाथाभिराह—जिय० जीवलोकस्य प्राणिवर्गषट्निकायात्मकस्य बांधवा इव बांधवा ये
वर्तते तेषां त्रिविधंत्रिविधेन रक्षाकरणात्कुगतिरेव सिंधुः कुगतिसमुद्रो वा तस्यास्तस्य वा पारं ती·
रं गच्छंतीति पारगास्तीरवर्तिनः कटाक्षीकृतसुगतित्वात्, भागोऽचिंत्या शक्तिर्महान् भागोऽतिशयविशे·

षो येषां ते तथा ज्ञानादिभिरेव ज्ञानदर्शनचारित्रैः शिवसुखं साधयंति ये ते शिवसुखसाधकाः, ते एवंविधाः साधवो मम शरणं भवंतु ॥ ३१ ॥ साधव एव ये प्रत्यक्षज्ञानादिसंपदुपेतास्तान् सार्धगाथया आह—केव० केवलमसहायं मत्यादिज्ञानानपेक्ष्यं सर्वद्रव्यसर्वपर्यायादिविषयं ज्ञानं विद्यते येषां ते केवलिनः, अवधिर्मर्यादा रूपिद्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः, परमश्चासाववधिश्च परमावधिः, स च क्षेत्रतो लोकप्रमाणासंख्येयालोकाकाशखंडप्रमाणः, कालतोऽसंख्येयोत्सर्पिण्यवसर्पिणीविषयः, द्रव्यतो रूपिद्रव्यप्रभृति यावत्परमाणुदर्शी, भावतः सामान्येनानंतपर्यायपरिच्छेदको विशेषतः परमाणोरपि चतुःपर्यायनिर्णयकारी, परमावधिश्चावश्यमंतर्मुहूर्तेन केवली भवति, तद्योगात्साधवोऽपि परमावधयः, उत्कृष्टावधिसाधुग्रहणेन जघन्यमध्यमावधयोऽप्यंतर्भाविता ज्ञेयाः, विपुला मतिर्येषां ते विपुलमतयः, अत्रापि विपुलमतिग्रहणेन ऋजुमतयोऽप्यंतर्भाविताः, एतौ च मनुष्यक्षेत्रांतर्वर्तिसंज्ञिपंचेंद्रियमनोद्रव्यविषयौ, श्रुतं कालिकोत्कालिकांगप्रविष्टादिलक्षणं धरंति योग्यशिष्यप्रदानेन तस्यावस्थितिं कुर्वंतीति श्रुतधराः प्रवचनव्याख्याननिपुणाः, ते एवंभूताः श्रुतधरा आचार्या उपाध्याया जिनमते जिनशासने ये आचार्योपाध्यायाः, एतेन मु-

ख्यानां ग्रहणात्प्रवर्तकस्थविरगणावच्छेदिनोऽपि ज्ञातव्याः, ते च सर्वे केवलिप्रभृतिसाधवो मम शर-
णं भवंत्वित्यर्थः ॥ ३२ ॥ चउ० पूर्वशब्दस्य तृतीयपदस्थस्यापि पृथग्योजनात् चतुर्दश पूर्वाणि वि-
द्यंते येषां ते चतुर्दशपूर्विणः श्रीभद्रबाहुस्वामिन इव, तान्येवाद्यानि दश येषां ते दशपूर्विणः श्या-
मार्यसूरय इव, नवपूर्विणः श्रीआर्यरक्षितगुरव इव, अंगशब्दस्य प्रत्येकमभिसंबंधात् द्वादशांगिनः,
इह चतुर्दशपूर्विणो द्वादशांगिनश्चैकार्था इति न वाच्यं, यतो द्वादशतमांगस्य दृष्टिवादलक्षणस्य
पंचप्रस्थानात्मकत्वात् एकादशांगिनश्च ये, चस्य भिन्नक्रमार्थत्वात्, ये विशेषानुष्ठानिनो विशेषल-
ब्धिसंपन्नाश्च तान् सार्धगाथया दर्शयति—जिणकप्पा० गाथार्धं, खीरासवमाहुः—एकाकित्वनिःप्रति-
कर्मशरीरतया जिनस्येव कल्पो येषां ते जिनकल्पिकास्तेषामयं विधिः—प्रतिपन्नजिनकल्पो यत्र
ग्रामे मासकल्पं चतुर्मासकं वा करिष्यति तत्र षड्भागान् कल्पयति, ततश्च यत्र भागे एकस्मिन् वि-
नेये गोचरचर्यां हिंडति, एषणादिविषयं मुक्त्वा न केनापि सार्धं जल्पति, एकस्यां च वसतौ यद्य-
पि उत्कृष्टतः सप्त जिनकल्पिका वसंति तथापि परस्परं न भाषंते, यद्युपविशति तदा नियमादुत्कट
एव, न तु निषद्या वासोपग्राहिकोपकरणस्यैवाभावात्, प्रतिपद्यमानकः सामायिकच्छेदोपस्थापनयोः

पूर्वप्रतिपन्नः सूक्ष्मसंपराययथाख्यातचारित्रयोरुपशमश्रेण्यामवाप्यते प्रतिपद्यमानानामुत्कृष्टतः शतपृथक्त्वं, पूर्वप्रतिपन्नानां सहस्रपृथक्त्वं जिनानां, जिनकल्पिकाः प्रायोऽपवादं नासेवंते, जंघाबलक्षीणस्त्वविहरमाणोऽप्याराधक एव, आवश्यिकीनैषेधिकीमिथ्याडुःकृतगृहिविषयपृछोपसंपल्लक्षणाः पंच सामाचार्यः, नत्विच्छादयः, लोचं चासौ नित्यमेव करोति, विहारो भिक्षा च पौरुष्यामेव, यदालंदिकास्तेषां स्वरूपमिदं—उदकार्द्रः करो यावता कालेन शुष्यति तत आरभ्य उत्कृष्टतः पंचरात्रिंदिवसलक्षणस्य उत्कृष्टलंदस्यानतिक्रमेण चरंतीति यथालंदिकाः. पंचको गणोऽमुं कल्पं प्रतिपद्यते ग्रामं च गृहपंक्तिरूपाभिः षड्भिर्वीथीभिर्जिनकल्पिकवत्परिकल्पयंति. किंत्वेकैकस्यां वीथ्यां पंच दिनानि पर्यटंति. इत्युत्कृष्टलंदधारिणो यथालंदिका उच्यंते, एते च प्रतिपद्यमानका जघन्यतः पंचदश भवंति, उत्कृष्टतः सहस्रपृथक्त्वं पूर्वप्रतिपन्नास्तु जघन्यत उत्कृष्टतस्तु कोटिपृथक्त्वं भवंति, परिहारविशुद्धिकाश्च ते साधवश्च परिहारविशुद्धसाधवः, निर्विशमानका निर्विष्टकायिकाश्च ते, तत्र यथोक्ततपस आसेवकत्वान्निर्विशमाना उच्यंते, अनुपहारिका विहितवक्ष्यमाणतपसो निर्विष्टकायिका इति, तत्र नवानामयं कल्पो भवति, ग्रीष्मशिशिरवर्षासु पृथक्पृथक् जघन्यमध्यमोत्कृष्टभेदं तपः कुर्वंति,

तत्र ग्रीष्मे चतुर्थषष्ठाष्टमेमानि, शिशिरे षष्ठाष्टमदशमानि, वर्षासु अष्टमदशमद्वादशमानि. पारणके चाचाम्लं, पंचानां भिक्षानां ग्रहो द्वयोरप्यभिग्रहः, तत्र प्रथमं चत्वारो यथोक्तं तपः कुर्वंति, चत्वारोऽनुपारिहारिकत्वमेकश्च कल्पस्थितत्वं, एते च पंचापि प्रतिदिनं षण्मासान् यावदाचाम्लभोजिनः, षण्मासानंतरं व्यूढतपसोऽनुपारिहारिकत्वं अनुपारिहारिकाश्च पारिहारिकत्वं, कल्पस्थस्तथैवास्ते याव-द् द्वितीयषण्मासाः, ततो द्वितीयषण्मासानंतरं कल्पस्थतपः करोति, तेषां व्यूढतपसामष्टानां मध्या-देकः कल्पस्थो भवति, सप्तानुपारिहारिका भवंति, अष्टावपि षण्मासं यावत्प्रतिदिनाचाम्लभोजिनः, अष्टादशभिर्मासैः पूर्णकल्पो भवति, कल्पसमाप्तौ पुनस्तमेव वा जिनकल्पं वा प्रतिपद्यंते गच्छं वा समायांति, प्रतिपत्तिश्च जिनसमीपे सेवकपार्श्वे वा, एते च सहस्रारांतमेव यांति ॥ ३३ ॥ खीरा० चीर्णपर्णकादिविशेषस्य चक्रवर्तिसंबंधिनो गोलक्षस्यार्धार्धक्रमेण पीतगोक्षीरस्य पर्यंते यावदेकस्या गोः संबंधि यत्क्षीरं तदिह गृह्यते, तदिव यस्य वचनरसमाधुर्यमाश्रवति मुंचतीति स क्षीराश्रवः, मधुशर्करादिमधुरद्रव्यं तद्रसतुल्यं यस्य वचनं स मध्वाश्रवः, उपलक्षणत्वात्सर्पिराश्रवश्च, ये सर्वैः शरीरावयवैः शृण्वंति जानंति च भिन्ना वाचः, चक्रवर्तिस्कंधावारबहलकोलाहलजशब्दसंदोहान्, अय-

मेतस्यायमेतस्येत्यादिव्यक्त्या पृथक्पृथक् व्यवस्थापयंतीति संभिन्नश्रोतसः; नीरंध्रधान्यकोष्टकक्षिप्त-
धान्यवद् ये सुनिश्चितस्थिरसंस्कारसूत्रार्थास्ते कोष्टबुद्धयः. अतिशयचरणाच्चारणास्ते च द्विधा जंघा-
चारणा विद्याचारणाश्च, विकुर्विति वैक्रियलब्धिमंतः साधवस्तेषां च नानारूपैरसंख्येयद्वीपसमुद्रान्तर-
णविषया वैक्रियशक्तिर्भवति, जंबूद्वीपं पुत्र्यादिरूपैर्बिभ्रत्यपि, ये पूर्वापरपदानुसारतस्त्रुटितपदमनुसरं-
ति पूरयंतीत्यर्थस्ते पदानुसारिणो वज्रस्वामिन इव, इह च येऽतिशयर्द्धिसंपन्नाः साधवो नोक्तास्तेऽ-
प्युपलक्षणत्वाद् ज्ञेयाः, एते च ये जिनकल्पिकादयः पदानुसारिपर्यंताः साधवस्ते शरणं भवंतु॥३४॥

सर्वसाधुगुणान् गाथापंचकेनाह—उज्झि० वैरं भूतकालजं तत्कालजो विरोधोऽप्रीतिविशेषः,
ततश्च वैराणि च विरोधाश्च, उज्झितास्त्यक्ता वैराणि विरोधाश्च, यैस्ते तथा नित्यं सदैव यत एव उ-
ज्झितवैरविरोधा अत एवाद्रोहाः परद्रोहवर्जिनः, वैरत एव परद्रोहाभिप्रायः स्यात्, यत एवाद्रोहा अत
एव प्रशांता सुप्रसन्ना मुखशोभा वदनच्छाया येषां ते तथा, परद्रोहिणो हि विकरालमुखशोभा भ-
वंतीति. यतश्चैवंस्वरूपा अत एवाभिगतोऽनुगतः सहचारी गुणसंदोहो गुणनिकरो येषां ते तथा,
एवंविधानां च ज्ञानातिशयो भवतीति. हतो मोहोऽज्ञानं यैस्ते तथा ज्ञानिन इत्यर्थः, ते शरणं

साधवो भवंतु ॥ ३५ ॥ खंडि० खंडितानि त्रोटितानि स्नेहरूपाणि दामानि रज्जवो यैस्ते खंडितस्ने· हदामानश्छिन्नस्नेहनिगमा इत्यर्थः. न विद्यंते कामधामानि स्मरमंदिराणि विषयासक्तिहेतूनि येषां ते तथा निःकामो निर्विषयो मोक्षसुखे कामोऽभिलाषो येषां ते तथा मोक्षाभिलाषिण इत्यर्थः: तथा इंगिताकारसंपन्नत्वात् सत्पुरुषाणामाचार्योपाध्यायादीनां वंदारूणां च दमदंतेनेव युधिष्टिरादीनामिव मनांस्यानंदयंत्यभिरामयंति सत्पुरुषमनोऽभिरामाः, तथा त्यक्तान्यकृत्यत्वादात्मानं तासु तासु प्रवच· नोक्तक्रियासु आ सामस्त्येन रामयंति क्रीडयंत्यात्मानमिति आत्मारामाः, यदिवा विशिष्टसंयमस्था- ननियोजनेन आत्मानं क्रीडास्थानं पुरनिवासिलोकस्योद्यानयानास्थानमिव येषां ते तथा, आचारं वा एवंप्रकारममंति गछंति आश्रयंत्याचारामा मुनयः शरणं भवंतु ॥ ३६ ॥ मिल्हि० मिल्हित्ता अ· पास्ता विषयाः शब्दाद्याः कषायाश्च यैस्ते तथा विषयकषायरहिता इत्यर्थः गृहगृहिण्योः संगः संबं· धस्तस्माद्यः सुखास्वादः सुखलेश्याविशेष उज्झितः परिहृतो यैस्ते, तथा उज्झितगृहगृहिणीसंगसुखास्वा- दा निःपरिग्रहा निर्जिगीषवश्चेत्यर्थः. न कलितौ न गणितौ न आश्रितौ हर्षविषादौ यैस्ते तथासम· याभावव्यवस्थितत्वात. विहूअसोआ इति पाठांतरं, विधूतानि श्रोतांसि आश्रवद्वाराणि, यैर्यदिवा

विधूतः क्षिप्तः शोकश्चित्तखेदो यैस्ते तथा विधूतासंयमस्थाना गतशोका वा इत्यर्थः. ते साधवः शरणं स्युः ॥ ३७ ॥ हिंसा० हिंसादिदोषैः शून्यास्तैर्विरहिता इत्यर्थः, कृतं विहितं कारुण्यं दुःखप्रहाणेच्छा दययार्द्रभावः सर्वसत्वेषु यैस्ते कृतकारुण्याः कृपाकवचितचेतस इत्यर्थः. तथा जीवाजीवादिपदार्थानां शासने यथाप्रणीतत्वेन रोचनं मननं श्रद्दधानं रुक्सम्यक्त्वं, प्रज्ञा बुद्धिः स्वयं भवतीति स्वयंभूः, स्वयंभुवौ रुक्प्रज्ञे सम्यक्त्वबुद्धी येषां ते स्वयंभूरुक्प्रज्ञाः. यद्वा स्वयंभूरुचा सम्यक्त्वेन पूर्णा स्वयंभूरुक्पूर्णा दूरीकृतमिथ्यात्वा इत्यर्थः. स्वयंभूसमुद्रतुल्ये वा विस्तीर्णे रुक्प्रज्ञे येषां ते, तथा न विद्येते जरामरौ वृद्धत्वनिधने यत्र तदजरामरं निर्वाणं तत्रोपदेष्टा, व्यावर्णयितव्ये च बहु प्रभूतं यथा भवत्येवं क्षुण्णा निपुणा मोक्षस्वरूपज्ञातार इत्यर्थः. यदा तु पह इति पाठस्तदा अजरामरपथदेशकत्वात् प्रवचनशास्त्राणि तत्र निपुणाः सम्यक् तद्वेदिन इत्यर्थः. ते साधवः शरणं भवंतु. सुष्टु अतिशयेन कृतं चारित्रप्राप्तिलक्षणं यैस्ते सुकृतपुण्याः, सुकृतैस्तपःप्रभृतिभिर्वा पूर्णा भृताः संचितप्रभूततपस इत्यर्थः ॥ ३८ ॥

काम्यतेऽभिलष्यते विषयार्थिभिरिति कामस्तस्य स्मरजनितविकारस्य या विडंबना कदर्थना

मदोन्मत्तस्येव नानाविक्रिया निःपरिवेष्टनं तस्याः कामविर्म्बनाया चुक्कति प्राकृतत्वाद् च्युतास्तयावि-रहिता विज्ञातपरमार्थत्वात्तां त्यक्तवंत इत्यर्थः कलिमलः पापस्तेन मुक्तास्तद्विवर्जिताः पवित्रचारित्र-नीरपूरेण तं प्रक्षालितवंत इत्यर्थः, अदत्तादानपरिहारेण आत्मनः पृथक्कृतं चौरिक्यं चौर्यं यैस्ते, त-था स्वामिजीवजिनगुर्वाद्यनुज्ञातभक्तपानादिग्रहणेन सर्वथापि तत्परिहृतवंत इत्यर्थः. पातयति जी-वानिति पापं, तस्य रजः कश्मलः पापरजश्च तत्सुरतं मैथुनं तेन रिक्तास्तत्त्यागिनो नवगुप्तिसनाथ-ब्रह्मव्रतचरणात्, यत एवंभूता अत एव साधूनां गुणाः साधुगुणा व्रतषट्कादयस्त एव रत्नानि तैश्च चिक्कत्ति दीप्तिमंतः, तैर्मंडिता इत्यर्थः, ते साधवः शरणमिति येषां ॥ ३९ ॥

साहु॰ साधुत्वे साधुस्वरूपे समभावपरसाहाय्यपरोपकारलक्षणे सुष्टु अतिशयेन स्थिता अध्यवसिता व्यवस्थिता यद् यस्माद्धेतोराचार्यादयः आचार्योपाध्यायप्रवर्तकस्थविरगणावच्छेदिनस्तत-स्ते पंचापि साधवस्तत्कार्यकारणात् साधुभणितेन साधुसत्कारेण गृहीता ग्रहणमागतास्तस्मात्ते सर्वे-ऽपि अत्राधिकारोक्तगुणगरिष्ठा अतीतानागतवर्तमानकालभाविनोऽतीतानागतयोरनंता वर्तमानोत्कृ-ष्टकाले नवकोटीसहस्रं, जघन्ये तु कोटीसहस्रद्वयं, ते सर्वे साधवो मम शरणं भवेयुः ॥ ४० ॥ च-

तुर्थशरणप्रतिपादनायाह—पडि० स साधुसाध्वीश्राद्धश्राविकान्यतमो जीवः प्रतिपन्नसाधुशरणोंगी-कृतमुनिशरणः, पुनरथशब्दार्थो भिन्नक्रमश्च, ततश्च पुनरथानंतरं जिनधर्मं शरणं कर्तुं प्रतिपत्तुमाश्र-यितुमिच्छन्नित्यध्याहार्यं. किंविशिष्टोऽसावित्याह—पहरिसत्ति तत्र वदनविकाशादिचिह्नगम्यो मानसः प्रीतिविशेषो हर्षः प्रहर्षः प्रकृष्टो हर्षः प्रहर्षस्तद्वशेन रोमांचप्रपंचो रोमोद्धर्ष उत्कर्षः स एव कंचुक-श्चोलकस्तेनांचिता विभूषिता तनूः शरीरं यस्य स प्रहर्षरोमांचप्रपंचकंचुकांचिततनुः प्रमोदपूरितांगः सन् इदं वक्ष्यमाणं भणति ॥ ४१ ॥ यच्च ब्रूते तदाह—पवर० प्रवरसुकृतैः प्राप्तं सम्यक्त्वदेशविरति-सर्वविरतिरूपं जिनप्रणीतं धर्ममिति संबंधः, यतो जीवस्यानादिभवाभ्यस्तैर्मिथ्यात्वादिभिर्हेतुभिः स-दैवावृत्तत्वेन तत्प्राप्तेरतिशयेन दुर्लभत्वात्, यदाह—अंतिमकोडाकोडीए । सवकम्माणमाउव-ज्जाणं ॥ पलियासंखिज्जइमे । भागे खीणे हवइ गंठी ॥ १ ॥ अपुव्वेणत्ति पुंजं । मिच्छत्तं कुणइ कुद्दवोवमया ॥ अनियट्टीकरणेण उ । सो सम्मदंसणं लहइ ॥ २ ॥ सम्मत्तम्मिय लद्धे । पलिय-पुहुत्तेण सावओ हुज्जा ॥ चरणोवसमइखयाणं । सागरसंखंतरा हुंति ॥ ३ ॥ यावत्यां कर्मस्थितौ सम्यक्त्वं लब्धं तन्मध्यात्पल्योपमपृथुक्त्वलक्षणे स्थितिखंडे क्षपिते देशविरतो भवेत्, ततोऽतिसं-

ख्यातेषु सागरेषु क्षिप्तेषु चारित्रमित्यादि, अतो नाल्पपुण्यैरवाप्यत इत्यर्थः, पुण्यवद्भिः प्राप्यत इत्युक्तं, तत्र किं सर्वैरपि तैर्लभ्यत इत्याह—पत्तेहिंत्ति पात्रैरपि भाग्यवद्भिरपि कैश्चिद्ब्रह्मदत्तचक्र्यादिभिरिव नवरि पुनर्न प्राप्तं नासादितं, प्राप्तत्वं च ब्रह्मदत्तस्य चक्रित्वलाभात्, देवेंद्रचक्रवर्त्यादिकर्मणां बंधो भव्यानामेवोक्त इति. तमेवंभूतं केवलिभिः प्रज्ञप्तं देशितं धर्मं श्रुतधर्मचारित्रधर्मरूपं शरणं प्रपन्नोऽहमिति ॥ ४२ ॥ धर्मस्यैव माहात्म्यमुपदर्शयन् तमेव शरणं प्रतिपत्सुराह—पत्ते० पात्रेण ज्ञातिकुलरूपसौभाग्यादिगुणयुक्तेन, न केवलं पात्रेण, अपात्रेणापि गुणवियुक्तेन दारिद्र्यापहतेन प्राप्तानि लब्धानि येन कारणेन नरसुरसुखानि, तत्र पात्रेण ऋजुत्वादिगुणवता वरुणसारथिमित्रेणेव नरसुखं विदेहेषु सुकुलोत्पत्त्यादिकं प्राप्तं. अपात्रेणापि दौःस्थ्याक्रांतेन कौशांब्यामार्यसुहस्तिप्रव्राजितसंप्रतिराजजीवद्रमकेणेव, पात्रेण सुरसुखं सर्वार्थसिद्धिसंभवं शालिभद्रेणेव, अपात्रेण सुरसुखं वसुदेवपूर्वभवे नंदिषेणेनेव प्राप्तं. पुनरर्थत्वान्मोक्षसुखं पुनः, चस्य भिन्नक्रमत्वात् पात्रेणैव, चारित्रधर्माधारभूतभव्यत्वगुणलक्षणेनेत्यर्थः, प्राप्यते, अथवा प्राप्तेन अप्राप्तेनापि लब्धेनालब्धेनापि येन जैनधर्मेण नरसुरसुखानि प्राप्तानि, तत्र प्राप्तेन यथालब्धसम्यक्त्वलाभेन धनसार्थवाहेन नरसुखं

मिथुनकसुखं, अप्राप्तेनापि तेनैव तस्मिन्नेव भवे सम्यक्त्वलाभात्पूर्वं प्राप्तेन सुरसुखं वीरजीववत्ताधिपेनेव, अप्राप्तेन सुरसुखं चरगपरिवाय बंभलोगो जा इत्युक्तेर्बहुभिरिव मोक्षसुखं पुनः प्राप्तेनैव प्राप्यते येन धर्मेण यच्च मरुदेवीप्रभृतयोऽलब्धेनापि तेन तदवाप्नुवन्, तत्तेऽपि भावतः प्राप्तचारित्रपरिणामा इति, नवरि पुनः स धर्मो मे मम शरणं भवतु ॥ ४३ ॥ निद० निर्दलितानि विदारितानि तत्कर्तृजनेभ्यः कलुषाणि मलिनानि कर्माणि येन धर्मेण स तथा निर्धौतसर्वपाप इत्यर्थः, यत एव निर्दलिताशुभकर्मा अत एव शुभं कृतं कर्म जन्म वा श्राश्रावकजनेभ्यो गणधरतीर्थकरत्वादिपदवीप्राप्तिलक्षणं येन स कृतशुभकर्मा जन्म वा, अत एव खलीकृतः शत्रुनिर्घाटितो निःसारितः कुधर्मो मिथ्याधर्मः सम्यक्त्ववतत्ववासितेभ्यो येन स तथा मिथ्यादृष्टिधर्मस्यारंभेऽप्यादावपि पंचाग्नितपःप्रभृत्यादेर्महाकष्टहेतुत्वेनासुंदरत्वात् परिणामे च मिथ्यात्वरूपत्वेन दुर्गतिमूलत्वादयं तु जिनधर्मः प्रमुखे आदाविह लोकेऽपि धम्मिल्लादीनामिव परिणामे परिपाकप्राप्तौ भवांतरे दामन्नकादीनामिव रम्यो मनोज्ञः, स एवंविधो धर्मो मम शरणं भवतु ॥ ४४ ॥ काल० कालत्रयेऽतीतानागतवर्तमानरूपे न मृतो न विनष्टस्तं न मृतं विदेहेषु नैरंतर्येण तत्सद्भावात् कालत्रयेऽपि धर्मो विद्यत एवेत्य-

र्थः. जन्म च जरा च मरणं च व्याधयश्च जन्मजरामरणव्याधयस्तेषां जन्मजरामरणव्याधीनां शतानि तानि सुष्टु अतिशयेन मृतानि स्थितानि विनष्टानि यस्मात् स तथा तं. अथवा जन्मजरामरणव्याधिशतानां शमकः सिद्धिपदप्रदानेन तन्निवारकस्तं अमर्यंवत्ति चारुवर्णगंधरसोपेतं वर्णबलसौभाग्यपुष्टिजननं सर्वरोगशमनं अनेकगुणसंपन्नममृतं तदिव सकललोकस्यानंदतुष्टिपुष्टिजनकत्वात् बहुमतः सर्वस्याप्यतिशयेनाभीष्ट इत्यर्थः. तं किं बहुमतं इति चेत् प्रक्रमायातं जिनधर्ममेव, न केवलं जिनधर्मं जिनमतं च प्रवचनं च द्वादशांगमित्यर्थः, तदप्येवंगुणमेव, शेषं प्राग्वत् ॥४५॥ पस० प्रशमितः सह्यं इत्यादि तद्विपाकदर्शनेनोपशमं नीतः कामस्य प्रकृष्टो मोह उन्मादो येन स तथा निवारितकामोद्रेक इत्यर्थस्तं, दृष्टाश्च अदृष्टाश्च दृष्टादृष्टा जीवाः, तत्र दृष्टा बादरैकेंद्रियद्वींद्रियादयः दृष्टिविषयत्वात्तेषां, अदृष्टाः सूक्ष्मपनकसूक्ष्मैकेंद्रियाः सर्वलोकवर्तिनोऽतिशयज्ञानिगोचरास्तेषु दृष्टादृष्टेषु जीवेषु न कल्पितो न कृतो विरोधो विपरीतप्ररूपणारूपो येन स तथा तं, केवलिप्रज्ञप्तत्वाद् यथावस्थितस्वरूपावेदकमित्यर्थः, शिवसुखमेव फलं तद्ददातीति शिवसुखफलदस्तं शिवसुखफलदं, अत एव न मोघोऽमोघोऽवंध्यः सार्थक इत्यर्थस्तमेवंप्रकारं धर्मं शरणमहं प्रपन्नः ॥ ४६ ॥ न-

रय० नरकगतिगमनरोधं, गुणानां क्षांत्यादीनां च संदोहः समुदयो यत्र स तथा तं, प्रकर्षवंतो वादिनः प्रवादिनस्त्रिषष्ट्यधिकत्रिशतानां संख्योपेताः, निःशब्दस्य निषेधार्थत्वात् तैः प्रवादिभिर्न क्षोभ्यत इति प्रवादिनिःक्षोभ्यस्तं प्रवादिनिःक्षोभ्यं, नवगुप्तिरचनारुचिरकवचकवचितत्वेन निर्जितः प्रतिहतो नाशं नीतो मन्मथयोधः कामसुभटो येन स तथा तं धर्मं शरणं प्रपद्येऽहं ॥ ४७ ॥ कृतधर्मशरणः पुनस्तस्यैव चारित्रश्रुतरूपस्य निध्युपमया नमस्कारमाह—भासुर० भास्वरगतिहेतुत्वाच्चारित्रधर्मस्य भास्वरः शोभनो वर्णः श्लाघा ' देवावि तं नमंसंतीत्यादि ' गुणोत्कीर्तनरूपो यस्मात्स सुवर्णः, सुंदरा मनोज्ञा इति कर्तव्यक्रियाकलापैश्चित्रा इच्छामिच्छादिदशभेदरूपा रचना परिकल्पना तस्या यथावसरमलंकरणादलंकारः सुंदररचनालंकारः, गौरवहेतुत्वात् गौरवं. महानर्घो माहात्म्यविशेषो यस्य स महार्घः, ततो द्वंद्वः, श्रुतधर्मपक्षे तु ' सुयधम्मो सज्झाओ ' इति वचनात्, श्रुतं द्वादशांगं तत्र भास्वरज्ञानिभिः केवलिभिरुक्तत्वात् भास्वरं, शोभना वर्णा अक्षराणि यत्र तत्सुवर्णं, ततः सुवर्णानामक्षराणां या सुंदरा रचना प्रदपंक्त्या विरचनं, तस्य द्वात्रिंशत्सूत्रदोषपरिहारेणाष्टगुणालंकरणेन चालंकारो विभूषणं, सुवर्णसुंदररचनालंकारस्तस्माच्च गौरवो गुरुत्वं, तथा एकैकस्यापि सू-

त्रस्यानंतार्थत्वात्, अतश्चोपमीयते निधिमिव महानिधानमिवेत्यर्थः, किंविशिष्टं? दुष्टगतिर्दुर्गतिः कुदेवत्वकुमानुषत्वतिर्यग्नरकलक्षणा, दुर्गतेर्भावो दौर्गत्यं, श्रुतधर्मपक्षे तु अज्ञानत्वं, तद् हरतीति, तत्र निधीयंते पोष्यंतेऽर्था एषु इति निधयः, भास्वरं दीप्तिमत्सुवर्णं कनकं सुंदराणि रुचिराणि रत्नानि पद्मरागादीनि अलंकारा हाराद्याभरणविशेषास्तैर्गौरवः संपूर्णता तेन च महार्घो बहुमूल्यः, अत एव दुर्गतस्य दरिद्रस्य भावो दौर्गत्यं तद्धरतीति दौर्गत्यहरः दारिद्र्यापहारकृदित्यर्थः, एवंविधो यो निधिस्तत्कल्पं जिनोपदिष्टं धर्मं वंदे, इत्यर्थेयं गाथा ॥ ४८ ॥ उक्तं चतुर्थं शरणं, तद्भणनेन चाभिहितोऽस्याध्ययनस्य प्रथमोऽर्थाधिकारः. द्वितीयार्थाधिकारमाह—चउ० चतुःशरणगमनेन चतुःशरणांगीकारेण संचितं राशीकृतं यत्सुचरितं पुण्यं तेन योऽसौ रोमांचो रोमोल्लासस्तेनांचितं भूषितं शरीरं यस्य स तथा शरणगमनार्जितस्य सुकृतस्य वशात्कंटकितगात्र इत्यर्थः, कृतानि विहितानि यानि दुःकृतानि अशुभाचारास्तेषां गर्हा गुरुसमक्षं हा दुष्कृतमित्यादिनिंदा तया कृतदुःकृतगर्हया योऽसावशुभकर्मक्षयः पापकर्मापगमस्तत्र कांक्षिर आकांक्षावान् भणति दुःकृतगर्हातो यः पापापगमो भवति तमात्मनः समभिलषन्नेवं वक्ष्यमाणं वदतीत्यर्थः ॥ ४९ ॥ यच्च भणति तदाह—इह०

इहास्मिन् भवे यत्कृतं तदिहभविकं, अन्यस्मिन् भवे भवमन्यभविकमतीतभविष्यद्भवसंभवमित्यर्थः, मिथ्यात्वप्रवर्तनं यत्किमप्यधिकरणं धनुरादि जिनप्रवचने प्रतिकुष्टं निराकृतं भवतीति हेतुत्वाद् दुष्टं तत्पापं गर्हामि जुगुप्सामि ॥ ५० ॥ मिच्छ० मिथ्यात्वमेव तमोंधकारं तद्रूपं पातकं वा तेन मिथ्यात्वतमोंधेन सता जीवेनार्हदादिषु अर्हत्सिद्धाचार्योपाध्यायादिषु अवर्णवादवचनमसद्दोषकथनं यदज्ञानेन जिनशासनबाह्येन विरचितं कृतं कारितमनुमतं वातीतानागतवर्तमानकाले, इदानीमवगतपरमार्थः सन् तत्पापं गर्हामि गुर्वग्रे निंदामि गुरुसमीपे आलोचयामि, गुरुभिर्दत्तं तपःकर्म सम्यक् प्रतिपद्येऽहं ॥ ५१ ॥ सुय० श्रुतं च धर्मश्च संघश्च साधवश्च श्रुतधर्मसंघसाधवस्तेषु पापं प्रत्यनीकतयाऽविशिष्टभावेन यद्रचितं अन्येष्वपि पापेषु अष्टादशसु प्राणातिपातादिषु विषयभूतेषु यत्किमपि पापं जीवव्यपरोपणादिकं कृतं तदप्यधुना गर्हामि ॥ ५२ ॥ यच्चोक्तमन्नेसु य पावेसु तदेव व्यक्तीकुर्वन्नाह—अन्नेसु० अन्येष्वपि जीवेषु यत्किमपि दुःखं कष्टं कृतमिदानीं तदपि पापं गर्हामि ॥५३॥ जंमण० यत्पापं मनोवाक्कायैः कृतकारितानुमतिभिराचरितं धर्मविरुद्धं प्रतिकूलमशुद्धं सदोषं सर्वं, शेषं प्राग्वत् ॥ ५४ ॥ तृतीयाधिकारमाह—अह० अथानंतरं स साधुप्रभृतिको जीवः दुःकृतगर्हया द·

लितानि उत्कटानि दुःकृतानि येन स तथा स्फुटं भणति, सुकृतानुरागेण समुत्पन्नाः पुण्याः पवित्रा ये पुलकांकुरा रोमोद्गमविशेषास्तैः करालो भीषणः कर्मवैरिणंप्रति ॥ ५५ ॥

अरि० अर्हत्त्वं तीर्थकरत्वं योजनप्रमाणवाण्या भविकनिकरप्रतिबोधकत्वं समवसरणादि च तेषु तीर्थकरेषु तदनुमन्येऽहं, यच्च सिद्धत्वं सिद्धेषु, आचारं आचार्येषु, उपाध्यायत्वमुपाध्यायेषु अनुमन्ये ॥ ५६ ॥ साहूण० साधुनां साधुचरितं चरणकरणादि, देशविरतिं च श्रावकजनानां श्रावकत्वमनुमन्ये इत्यर्थः, सर्वेषां सम्यक्त्वं सम्यग्दृष्टीनामविरतानां श्रेणिकादीनामिव ॥ ५७ ॥ अहव० अथवा सर्वमेव वीतरागवचवानुसारि यत्सुकृतं जिनशासनोक्तं कालत्रयेऽपि त्रिविधं मनोवाक्कायैः कृतं कारितमनुमोदितमनुमोदयामोऽनुमन्यामहे तकं सर्वं ॥ ५८ ॥ चतुःशरणादीन् कुर्वतो यद्भवति तद्गाथाद्वयेनाह—सुह० शुभपरिणामो नित्यं चतुःशरणगमनाद्याचरन् कुर्वन् साधुप्रभृतिको जीवः कुशलप्रकृतीः पुण्यप्रकृतीर्द्विचत्वारिंशत्संख्या बध्नाति, तथा ताश्च प्रकृतीर्मंदाबद्धाः सतीर्विशिष्टाध्यवसायवशात् शुभानुबंधाः शुभोत्तरकालफलविपाकाः कुर्वंतीति गम्यं ॥ ५९ ॥ मंद० ता एव शुभप्रकृतीर्मंदानुभावबद्धाः स्वल्पशुभपरिणामबद्धाः विशिष्टतरशुभाध्यावसायविशेषात्तीव्रानुभावा अत्युत्कटर-

साः करोति, किंचाल्पकालस्थितिका दीर्घकालस्थिती करोति, अल्पप्रदेशिका बहुप्रदेशिकाश्च करोति, तथाऽशुभा व्यशीतिसंख्या नाणंतरायेत्यादिकाः पापप्रकृतीः पूर्वं बद्धा अशुभा निरनुबंधास्तद्विपाकजनितदुःखरहिताः करोति, तीव्राश्च ताः सतीः शुभपरिणामेनैव मंदानुभावा अल्पविपाकाः करोति, किंच दीर्घकालस्थितीरल्पकालस्थितीः करोति, बहुप्रदेशिका अल्पप्रदेशिकाः करोति ॥६०॥ ता एयं० तस्मात्कारणादेतदनंतरोदितं चतुःशरणादिकं कर्तव्यं बुधैरवगततत्वैर्नित्यमपि संक्लेशे रोगाद्यापदि निरंतरं कर्तव्यं, क्रियमाणं तदुपशमाय स्यादिति. भवति त्रिकालं त्रिसंध्यं विधीयमानं सम्यग्मनोवाक्कायोपयुक्ततया असंक्लेशे रोगाद्यभावे सुगतिफलं स्वर्गापवर्गप्रदं ॥ ६१ ॥ चउरंगो० चत्वारि दानशीलतपोभावनारूपाण्यंगानि यस्य स चतुरंगो जिनधर्मो न कृतः, आलस्यमोहादिभिः कारणैर्विगतविवेकत्वात, तथा न केवलं चतुरंगधर्मो न कृतः किंतु चतुरंगशरणमप्यर्हत्सिद्धसाधुधर्मशरणमपि न कृतं, तथा चतुरंगभवस्य नरकतिर्यग्नरामरलक्षणस्य छेदो विनाशो विशिष्टचारित्रतपश्चरणादिना न कृत इति. हा इति खेदे हारितं वृथा नीतं जन्म मानुषभवः, तस्य हारणं चाकृतधर्मत्वेनातिशयेन मानुषत्वस्य पुनर्दुःप्रापत्वात् ॥ ६२ ॥ इय० इत्युक्तप्रकारेण हे जीव आत्मनः प्र-

त्रस्यानंतार्थत्वात्, अतश्चोपमीयते निधिमिव महानिधानमिवेत्यर्थः, किंविशिष्टं? दुष्टगतिर्दुर्गतिः कुदेवत्वकुमानुषत्वतिर्यग्नरकत्वलक्षणा, दुर्गतेर्भावो दौर्गत्यं, श्रुतधर्मपक्षे तु अज्ञानत्वं, तद् हरतीति, तत्र निधीयंते पोष्यंतेऽर्था एषु इति निधयः, भास्वरं दीप्तिमत्सुवर्णं कनकं सुंदराणि रुचिराणि रत्नानि पद्मरागादीनि अलंकारा हाराद्याभरणविशेषास्तैर्गौरवः संपूर्णता तेन च महार्घो बहुमूल्यः, अत एव दुर्गतस्य दरिद्रस्य भावो दौर्गत्यं तद्धरतीति दौर्गत्यहरः दारिद्र्यापहारकृदित्यर्थः, एवंविधो यो निधिस्तत्कल्पं जिनोपदिष्टं धर्मं वंदे, इत्यर्थेयं गाथा ॥ ४८ ॥ उक्तं चतुर्थं शरणं, तद्भणनेन चाभिहितोऽस्याध्ययनस्य प्रथमोऽर्थाधिकारः. द्वितीयार्थाधिकारमाह—चउ० चतुःशरणगमनेन चतुःशरणांगीकारेण संचितं राशीकृतं यत्सुचरितं पुण्यं तेन योऽसौ रोमांचो रोमोल्लासस्तेनांचितं भूषितं शरीरं यस्य स तथा शरणगमनार्जितस्य सुकृतस्य वशात्कंटकितगात्र इत्यर्थः, कृतानि विहितानि यानि दुःकृतानि अशुभाचारास्तेषां गर्हा गुरुसमक्षं हा दुष्कृतमित्यादिनिंदा तया कृतदुःकृतगर्हया योऽसावशुभकर्मक्षयः पापकर्मापगमस्तत्र कांक्षिर आकांक्षावान् भणति दुःकृतगर्हातो यः पापापगमो भवति तमात्मनः समभिलषन्नेवं वक्ष्यमाणं वदतीत्यर्थः ॥ ४९ ॥ यच्च भणति तदाह—इह०

इहास्मिन् भवे यत्कृतं तदिहभविकं, अन्यस्मिन् भवे जवमन्यभविकमतीतभविष्यद्भवसंज्ञवमित्यर्थः, मिथ्यात्वप्रवर्तनं यत्किमप्यधिकरणं धनुरादि जिनप्रवचने प्रतिकुष्टं निराकृतं जवतीति हेतुत्वाद् दुष्टं तत्पापं गर्हामि जुगुप्सामि ॥ ५० ॥ मिछ० मिथ्यात्वमेव तमोंधकारं तद्रूपं पातकं वा तेन मिथ्यात्वतमोंधेन सता जीवेनार्हदादिषु अर्हत्सिद्धाचार्योपाध्यायादिषु अवर्णवादवचनमसद्दोषकथनं यदज्ञानेन जिनशासनबाह्येन विरचितं कृतं कारितमनुमतं वातीतानागतवर्तमानकाले, इदानीमवगतपरमार्थः सन् तत्पापं गर्हामि गुर्वग्रे निंदामि गुरुसमीपे आलोचयामि, गुरुजिर्दत्तं तपःकर्म सम्यक् प्रतिपद्येऽहं ॥ ५१ ॥ सुय० श्रुतं च धर्मश्च संघश्च साधवश्च श्रुतधर्मसंघसाधवस्तेषु पापं प्रत्यनीकतयाऽविशिष्टभावेन यद्रचितं अन्येष्वपि पापेषु अष्टादशसु प्राणातिपातादिषु विषयभूतेषु यत्किमपि पापं जीवव्यपरोपणादिकं कृतं तदप्यधुना गर्हामि ॥ ५२ ॥ यच्चोक्तमन्नेसु य पावेसु तदेव व्यक्तीकुर्वन्नाह—अन्नेसु० अन्येष्वपि जीवेषु यत्किमपि दुःखं कष्टं कृतमिदानीं तदपि पापं गर्हामि ॥५३॥ जंमण० यत्पापं मनोवाक्कायैः कृतकारितानुमतिभिराचरितं धर्मविरुद्धं प्रतिकूलमशुद्धं सदोषं सर्वं, शेषं प्राग्वत् ॥ ५४ ॥ तृतीयाधिकारमाह—अह० अथानंतरं स साधुप्रभृतिको जीवः दुष्कृतगर्हया द-

ज्वलितानि उत्कटानि दुःकृतानि येन स तथा स्फुटं जणति, सुकृतानुरागेण समुत्पन्नाः पुण्याः पवि-
लितानि उत्कटानि दुःकृतानि येन स तथा स्फुटं जणति, सुकृतानुरागेण समुत्पन्नाः पुण्याः पवि-

त्रा ये पुलकांकुरा रोमोद्गमविशेषास्तैः करालो भीषणः कर्मवैरिणंप्रति ॥ ५५ ॥
अरि० अर्हत्त्वं तीर्थंकरत्वं योजनप्रमाणवाण्या भविकनिकरप्रतिबोधकत्वं समवसरणादि च ते-
षु तीर्थंकरेषु तदनुमन्येऽहं, यच्च सिद्धत्वं सिद्धेषु, आचारं आचार्येषु, उपाध्यायत्वमुपाध्यायेषु अ-
नुमन्ये ॥ ५६ ॥ साहूण० साधुनां साधुचरितं चरणकरणादि, देशविरतिं च श्रावकजनानां श्राव-
कत्वमनुमन्ये इत्यर्थः, सर्वेषां सम्यक्त्वं सम्यग्दृष्टीनामविरतानां श्रेणिकादीनामिव ॥ ५७ ॥ अह०
अथवा सर्वमेव वीतरागवचनानुसारि यत्सुकृतं जिनशासनोक्तं कालत्रयेऽपि त्रिविधं मनोवाक्कायैः कृ-
तं कारितमनुमोदितमनुमोदयामोऽनुमन्यामहे तकं सर्वं ॥ ५८ ॥ चतुःशरणादीन् कुर्वतो यद्भवति
तद्गाथाद्वयेनाह—सुह० शुभपरिणामो नित्यं चतुःशरणगमनाद्याचरन् कुर्वन् साधुप्रभृतिको जीवः कु-
शलप्रकृतीः पुण्यप्रकृतीर्द्विचत्वारिंशत्संख्या बध्नाति, तथा ताश्च प्रकृतीर्मंदाबद्धाः सतीर्विशिष्टाध्यवसा-
यवशात शुभानुबंधाः शुभोत्तरकालफलविपाकाः कुर्वंतीति गम्यं ॥ ५९ ॥ मंद० ता एव शुभप्रकृ-
तीर्मंदानुभावबद्धाः स्वल्पशुभपरिणामबद्धाः विशिष्टतरशुभाध्यावसायविशेषात्तीव्रानुभावा अत्युत्कटर-

साः करोति, किंचाल्पकालस्थितिका दीर्घकालस्थिती करोति, अल्पप्रदेशिका बहुप्रदेशिकाश्च करोति, तथाऽशुभा व्यशीतिसंख्या नाणंतरायेत्यादिकाः पापप्रकृतीः पूर्वं बद्धा अशुभा निरनुबंधास्तद्विपाकजनितदुःखरहिताः करोति, तीव्राश्च ताः सतीः शुभपरिणामेनैव मंदानुभावा अल्पविपाकाः करोति, किंच दीर्घकालस्थितीरल्पकालस्थितीः करोति, बहुप्रदेशिका अल्पप्रदेशिकाः करोति ॥६०॥ ता एयं० तस्मात्कारणादेतदनंतरोदितं चतुःशरणादिकं कर्तव्यं बुधैरवगततत्त्वैर्नित्यमपि संक्लेशे रोगाद्यापदि निरंतरं कर्तव्यं, क्रियमाणं तदुपशमाय स्यादिति. भवति त्रिकालं त्रिसंध्यं विधीयमानं सम्यग्मनोवाक्कायोपयुक्ततया असंक्लेशे रोगाद्यभावे सुगतिफलं स्वर्गापवर्गप्रदं ॥ ६१ ॥ चउरंगो० चत्वारि दानशीलतपोभावनारूपाण्यंगानि यस्य स चतुरंगो जिनधर्मो न कृतः, आलस्यमोहादिभिः कारणैर्विगतविवेकत्वात्, तथा न केवलं चतुरंगधर्मो न कृतः किंतु चतुरंगशरणमप्यर्हत्सिद्धसाधुधर्मशरणमपि न कृतं, तथा चतुरंगभवस्य नरकतिर्यग्नरामरलक्षणस्य छेदो विनाशो विशिष्टचारित्रतपश्चरणादिना न कृत इति. हा इति खेदे हारितं वृथा नीतं जन्म मानुषभवः, तस्य हारणं चाकृतधर्मत्वेनातिशयेन मानुषत्वस्य पुनर्दुःप्रापत्वात् ॥ ६२ ॥ इय० इत्युक्तप्रकारेण हे जीव आत्मनः प्र-

मादमहारयः. महारित्वं चैषां तद्वशवर्तिनोऽतिशयर्द्धिश्रुतसंपदुपेता अपि च दुर्गतिभाजो भवंतीति. ततः प्रमादमहारीणां वीरवद्वीरं सुभटकल्पमित्यर्थः. भद्रं कल्याणमंते यस्मात्तद्भद्रांतं मोक्षप्रापकमित्यर्थः, एतदध्ययनं ध्यायस्व स्मर त्रिसंध्यं संध्यात्रयेऽवंध्यकारणं. केषां? निर्वाणं निर्वृत्तिर्मोक्ष इत्यर्थः, तत्स्वरूपं चेदं तस्या निर्वृत्तेः सुखानि तत्सुखानि तेषां, अथवा शास्त्रकर्तुर्नाम इति उल्लेखो, जितप्रमादमहारिश्चासौ वीरभद्रस्तस्येदं तदेवोत्कृष्टमध्ययनं ध्यायस्वेत्यादि. शेषं पूर्ववत् ॥ ६३ ॥

॥ इति चतुःशरणपंजिका समाप्ता ॥

---

अथ बृहदातुरप्रत्याख्यानविषमपदव्याख्या प्रारभ्यते—देसिकदेस० षण्णां पृथिव्यादिकायानां षष्ठांशत्वाद्देशस्त्रसकायव्यपरोपणस्तस्य अपि संकल्पारंभत्वे तद्विभेदत्वात्, देशस्य त्रसकायस्य एकदेशः संकल्पजनितवृत्तिरूपः, सोऽपि सापराधनिरपराधत्वेन द्विधा. देशैकदेशदेशमात्रस्य स्वयं हननघातनतया विरतो निवृत्तो देशैकदेशविरतः. अविपरीता तत्वश्रद्धानरूपा दृष्टिर्दर्शनं मतिर्यस्यासौ सम्यग्दृष्टिर्म्रियते यः श्रावकजीवः, तदिह यद्देशयतिमरणं तज्जिनशासने बालपंडितमरणं भणि-

तं, शेषशासनेषु बालादिन्नाषाऽन्नावात् ॥ १ ॥ व्रतान्याह—पंचय० पंचाणुव्रतानि सप्त च शिक्षाव्रतानि, एष द्वादशव्रतात्मकः श्रावकधर्मो देशयतिधर्मः, तेन सर्वेण वा द्वादशव्रतात्मकेन देशेन वा अन्यतरव्यतिपत्तिलक्षणेन युक्तो देशयतिर्भवति ॥ २ ॥ व्रतानि नामत आह—पाण० प्राणवधः मृषावादः अदत्तादानं परदारनियमणेहिं च दारयंति विनाशयंति पुरुषस्यांतरंगबहिरंगगुणानिति दाराः, परेषां दाराः परदाराः परकलत्राणि, तेषां नियमनैरुपरमैश्च, परिमीयतेस्म परिमिता, न परिमिता अपरिमिता, एषणमिच्छा. अपरिमिता चासौ इच्छा च. तस्या अपरिमितेच्छानश्च यानि विरमणानि निवृत्तयस्तैरणुव्रतानि भवेयुस्तानि ॥ ३ ॥ जंच० दिशां विरमणं दिग्विरमणं. दिशा त्रा कृत्वा यद्विरमणं तत्प्रथमं गुणव्रतं. अर्थ्यते क्रियते प्रयोजनवशतया इत्यर्थः. न अर्थोऽनर्थः; अनर्थं निरर्थप्रयोजनं, दंडयंते निपात्यंते जीवा एभिरित्यनर्थदंडास्तेभ्यो यद्विरमणं तद्गुणव्रतं २. दिशामवकाशः प्रतिदिनमानं तत्र भवं देशावकाशिकं, तदपि च विरमणरूपं. सव्ववएसु जे पमाणा ठविया ते पुण दिवसज्जसारेइ, आवश्यकचूर्णौ—सव्ववयाणं करिज्जा संखेवं. तन्मतमाश्रित्य सर्वव्रतगुणकारकत्वात् देशावकाशिकस्यापि गुणव्रतत्वं ॥ ४ ॥ न्नोगाणं० सकृदेकवारं भुज्यंते इति न्नो-

गाः, आहारपुष्पादयः, उपलक्षणत्वात्परिभुज्यंते इति परिभोगा गृहांगनादिकाः, परिसंख्यानं परिसंख्याः प्रमाणकरणमित्यर्थः, समस्य आयो लाभः समायः, समाय एव सामायिकं. न संति तिथयः पर्वाण्युत्सवाश्च यस्यासावतिथिः, संविभजनं संविभागः. अतिथेः संविभागोऽतिथिसंविभागश्च, पोषं पुष्टिं धर्मस्य दधातीति पौषधं. तस्य विधिः पौषधविधिश्च, सर्वश्चतुर्विधाहारशरीरसत्कारब्रह्मचर्यव्यापारलक्षणः, एतानि चत्वारि शिक्षाव्रतान्युक्तानि ॥ ५ ॥ श्रावको बालपंडितमरणेन म्रियत इत्याह—आसु० आशु शीघ्रं करणं कारः आशुकारो मरणावसरस्तेन मरणं. तस्मिन् मरणेऽचिंतितोपस्थितोपक्रमणे झटिति प्रत्यासन्नीभूते मरणकाले तत्र बालपंडितमरणं कुर्यात्, अथवा क्रमेणैव मरणकालः समागतः, परं संलेखना नाकारि कस्मादित्याह—अछिन्नाएत्ति न छिन्ना त्रुटिता या जीविताशा तया हेतुभूतया संलेखनासंस्तारकदीक्षापनव्यवधायिना णाएहिं वा अमुक्कोत्ति ज्ञातजैर्वा स्वजनैर्न मुक्तो न मुत्कलितः, पछिमसंलेहणमकिच्चत्ति अतः पश्चिमकालकर्तव्यसंलेखनां तपसा शरीरशोषणरूपामकृत्वैव मरणं करोति तद्बालपंडितमरणमुक्तं, इत्यग्रेतनगाथायां संबंधः ॥ ६ ॥ आलो० स च गृहे कथं म्रियत इत्याह—आलोच्य गीतार्थगुरुसमीपे आलोचनां कृत्वा तद्दत्तं प्राय-

श्चित्तं चांगीकृत्य निसल्लोत्ति शल्यं द्रव्यभावभेदाद् द्विधा, द्रव्यशल्यं कंटकतोमरादि, भावशल्यं मूलगुणोत्तरगुणविराधनादि, तदालोचनादानेन निःकाश्य निर्गतं शल्यमस्मादिति निःशल्यः, स चैवं कृत्वा ' सघरे चेवारुहित्तुत्ति ' निजसदने एवारुह्यांगीकृत्य संस्तारकं अनशनप्रतिपत्तिकाले दर्भादिसंस्तरणरूपं, तस्मिन् संस्तारके कृतानशनः समाधिमान् यदि म्रियते देशविरतस्तदुक्तं बालपंडितमरणं ॥ ७ ॥ केन विधिनाह—जोभत्त० यो भक्तपरिज्ञाध्ययने श्रावकस्यानशनप्रतिपत्तिं कुर्वतः उपक्रमः पीठबंधो विस्तरेण गुरुपूजासंघपूजासाधर्मिकवात्सल्यस्वजनवात्सल्यदीनादिदाननिजद्रव्यतोऽपूर्वजिनचैत्यकारापणबिंबनिर्माणतत्प्रतिष्ठापनसिद्धांतपुस्तकलेखनयथौचित्यचतुर्विधसंघसन्माननप्रव्राजनकारापणतीर्थयात्राविधापनजिनशासनप्रभावनाहेतुप्रभूतद्रव्यस्तवकरणस्वजनमुत्कलापनचैत्यवंदनगुरुविज्ञापनद्वादशव्रतिवंदनालोचनाग्रहणसम्यक्त्वाणुव्रतोच्चारणपुरस्सरो यस्तत्र निरवशेषो विधिर्निर्दिष्टो भणितः, स एवात्राप्यध्ययने बालपंडितमरणे वर्णयितव्यो यथायोग्यं यथोचितं ज्ञेयः ॥ ॥ ८ ॥ तस्यैवंविधाराधनायुक्तस्य क उपपात आह—वै० वैमानिकास्ते च ज्योतिष्का अपि, तद्व्यवच्छेदोपकल्पान् सौधर्मादीनुपगच्छंतीति कल्पोपगास्तेषु, न तु कल्पातीतेषु नियमेन तस्य श्राव-

कस्योपपातः, निश्चयादुत्कृष्टतो भवानंगीकृत्य सप्तमे भवे सेत्स्यति स श्रावकः ॥ ९ ॥ इय० पर्यतसमयेऽपि सर्वविरतेरनंगीकरणात् बालं अनशनप्रतिपत्तेश्च पंडितं बालं च तत्पंडितं च बालपंडितं भवति मरणं अर्हच्छासने भणितं, इतोऽनंतरं पंडितं पंडितं मरणं सुसाधुमरणं वक्ष्ये संक्षेपेण ॥१०॥ एतद्ग्रंथकारवचनं यदेव चानेन भणितुमिष्टं तदेव क्षपक एव गुरुविज्ञप्तिद्वारेणाह—इच्छा० अभिलषामि प्रतिपद्ये भदंत इति गुरुंप्रति विज्ञपयति उत्तमार्थं अनशनप्रतिपत्तिं कर्तुमभिलषामि, तमिच्छन्नहं किं करोमि? प्रतिक्रमामि सामान्येन पापेभ्यो निवर्ते सर्वस्मादसन्मार्गात्, पुव्विं अन्नाणयाए इत्यादि पंचदशभिर्हेतुभिः प्रतिपन्नादसन्मार्गान्निवर्ते सन्मार्गं प्रपद्ये, प्रतिक्रमणे भणितेऽपि त्रिकालविषयमाह—

अतीतं पापव्यापारं निंदागरिहा सोही इत्यादिप्रकारेण प्रतिक्रमामि, अनागतं सावद्यारंभं परिहरणावारणानियत्तीय इत्यादिभेदेन प्रतिक्रमामि, प्रत्युत्पन्नं वर्तमानकालभाविकर्मबंधं प्रतिचरणाविधानेन प्रतिक्रमामि, किंस्वरूपं प्रतिक्रमामि? कृतं पापमात्मना प्रतिक्रमामि, कारितमन्येषां हस्तेन तदेव प्रतिक्रमामि अनुमोदितं यत्त्वया शत्रुहननादि, भव्यं कृतमिति वदनं तत्प्रतिक्रमामि, त-

देवमतीतादिभेदं कृतादिभेदं वा शुभमनोवाक्कायव्यापारं हेतुचतुष्टयादेव बध्नाति जीवः अतस्तदेव प्रतिक्रमणद्वारेण व्यनक्ति, मिच्छत्तं पडिक्कमामि मिथ्यात्वं आभिग्राहिकादिपंचप्रकारं, असंयममेकविधरूपं कषायं चतुःप्रकारं पंचप्रकारं पापप्रयोगं त्रिविधं मनोवाक्काययोगं प्रतिक्रमामि, अतः परं मिच्छामिच्छादंसणपरिणामेसुवा इत्याद्येषु पडिबुद्धस्स वा पर्यंतेषु सर्वेषु पदेषु जो मे कोइ देवसिओ राइओ उत्तमट्ठे अइक्कमो वइक्कमो अइयारो अणायारो तत्र मिच्छादुक्कडमिति योज्यं, तत्र मिथ्यादर्शनपरिणामे सति तद्द्वांगयां यो मम दैवसिको रात्रिको वा अतिक्रमव्यतिक्रमातीचारानाचारादिर्जातस्तस्य मिथ्यादुष्कृतं करोमि, इहलोका मनुष्यलोकास्तेषु मनुष्येषु यदपराद्धं तस्य मिथ्यादुष्कृतं, वा शब्दः सर्वपदेषु समुच्चयार्थः, परलोकेषु मनुष्यजातिव्यतिरिक्तेषु तिर्यगादिषु यदपराद्धं तस्य मिथ्यादुष्कृतं, सचित्तेषु पृथिव्यादिषु यत्संघट्टनादि कृतं तस्य मिथ्या० अचित्तेषु सुषिरतृणदुःप्रत्युपेक्षितकंबलादिषु यदुपवेशनादि कृतं, पंचसु इंद्रियार्थेषु रूपरसगंधस्पर्शरूपेषु मनोज्ञामनोज्ञेषु यदनुरागविरागादि कृतं तस्य मिथ्या० तथा अन्नाणे झाणे इत्यादि मिथ्यादर्शनादिषु अज्ञानादिध्यानेषु च सत्सु मम यो ज्ञानादीनामतिक्रमादिर्जातस्तस्य प्रतिक्रमामीति संटंकः. अज्ञानस्य ध्या-

नं दुष्टाचारस्य ध्यानं अनाचारध्यानं, यत्कुत्सितं दर्शनं तत्कुदर्शनं, तस्य ध्यानं, देवत्वं प्राप्तस्य मि-
थ्याभावपरिणतस्य सम्यग्दृष्टेरपि सुराष्ट्रश्रावकस्येव तस्मिन् कुदर्शनध्याने, क्रोधध्याने इत्यादिसुग-
मं. इच्छनं इच्छा संभाव्यमानस्यार्थस्याभिलाषातिरेकः, मिथ्या विपर्ययस्तद्दृष्टित्वं मिथ्याध्यानं त-
स्मिन्, मूर्छा अत्यर्थं राज्याद्यभिष्वंगः, संशयकरणं शंका, कांक्षणं कांक्षा ' कंखा अन्नदंसणग्गा
होइत्ति भणनात् ' गर्द्धनं गृद्धिराहारादिष्वत्यंताकांक्षा, गृद्धेर्ध्यानं तस्मिन्, निःपाथेयस्य परशंबल-
लाभप्रार्थनमाशा तीव्रकामाभिलाषः, तृष्णा तृट्परीषहादयः, क्षुधा क्षुत्परीषहादयः, अल्पकालगम्यो-
ऽध्वा पथि वा ध्यानं तस्मिन्, प्रस्थानमशुभमनसा गमनं तस्य ध्यानं तस्मिन्, नितरां द्राणं कुत्सित-
त्वगमनं निद्रा, स्वर्गादिऋद्धिप्रार्थनं निदानं तस्य ध्यानं, स्नेहो मोहोदयजन्यः प्रीतिविशेषः, कामो
विषयाभिलाषः, अपमानतः परगुणोत्कर्षप्रशंसाभिसूयातश्च मायावलेपाश्च चित्तस्य ये ते कलुषः,
कलहश्च विकारारातिः, युद्धं परस्परं प्राणव्यपरोपणाध्यवसायो, वैरेण निर्गतमधमं युद्धं प्राणापहार-
रूपं यत तत्ताभ्रयुद्धं दृष्टिमुष्ट्यादिभिरेव. संगपरित्यक्तेष्वपि पुनः संयोगो संगः, संग्रहोऽत्यर्थमतृ-
प्त्या धनमेलनं, व्यवहारः कार्यपरिछेदार्थं राजकुलादौ, क्रयविक्रयो लाभार्थं अल्पमूल्येन बहुमूल्य-

वस्तुग्रहणं, अनर्थदंडो निःप्रयोजनं प्राणिघातनं, आभोगोज्ञानपूर्वको व्यापारस्तस्य ध्यानं तस्मिन्, ब्राह्मणनयनाभोगे फलानपि मृदुतो ब्रह्मदत्तमेव अनाभोज्यंत विस्मृतिः, अणाइल्लंफाणे अणांप्रणं तेणं आविलः कलुषः, वैरं पितृभ्रातृवधादिसमुत्थं, वितर्कणं वितर्कः, ऊहः कथं राज्यादि ग्रहीष्ये इति चिंता, हिंसा महिषादिजीवमारणं, हासः परविप्रतारणं, उपहासो निंदास्तुतिः, प्रकृष्टो द्वेषः प्रद्वेषः, फरुसमिति निष्ठुरं कर्म तस्य ध्यानं तस्मिन्, भयं मोहांतर्गतनोकषायरूपा प्रकृतिः, रूपं देहादि, अप्पपसंसंप्राणे सुगमं, परनिंदा परगर्हा परदोषोद्घाटनं, परिग्रहः स बाह्याभ्यंतरः, परपरिवादः परविकत्थनं, परदूषणं परेणाकृतमपि तंप्रत्यात्मदोपवदापनं, आरंभः परोपद्रवः, संरंभः संकल्पो विषयादिषु तीव्राभिलाषः, पापं परस्त्रीसेवनादि तस्यानुमोदनं अव्यमनेन कृतमिति वदनं, अधिकरणं कर्मोपादानहेतुकूपारामादि, असमाधिना एष म्रियत इति चिंतनं असमाधिमरणध्यानं तस्मिन्, स्कंदकाचार्यप्रति क्षुल्लकं प्रथमे यंत्रे पीलयतः पालकस्येव, कर्मणामुदयप्रत्यये हेतुर्यस्य ध्यानस्य तत्कर्मोदयप्रत्ययं कर्मोदयप्रत्ययेन ध्यानं कर्मोदयप्रत्ययध्यानं, प्रथमं शुभपरिणामवतोऽपि पश्चात्कुतश्चित्कारणात कर्मोदयतोऽशुभपरिणामत्वं पर्यंतकाले विष्णोरिव, ऋद्धिगौरवं रसगौरवं सातागौरवं,

सातागर्वो यथाहमेव सुखीत्यभिमानः, विरतिर्विरमणं, न विरमणमविरमणं, तस्य ध्यानं तस्मिन्, यथा मातृपुत्रयोर्विरतिबुद्धिरित्यंगीकृत्य तामपि देशविरतिं परित्यज्य प्रांतग्राममाश्रितयोः, मुक्तिः शिवगतिरूपा, न मुक्तिरमुक्तिस्तस्यामुक्तिमरणं तस्य ध्यानं तस्मिन्, यथा मुक्तिविघ्नकरमेतन्निदानं मा कुरु चित्रसंभूतिवत्. कस्यामवस्थायां जातानीत्याह—पसुत्तस्सवात्ति प्रसुप्तस्य निद्रांगतस्य प्रतिबुद्धस्य जाग्रतः यो मे मया कोऽपि बहुर्वाल्पो वा दैवसिको रात्रिक उत्तमार्थे ज्ञानादौ अतिक्रम आधाकर्माद्यामंत्रणादौ प्रतिश्रवणरूपः, विशेषेणातिक्रमणं व्यतिक्रमणस्तस्यैव ग्रहणाय पदभेदरूपः, अतीचार आधाकर्मादिग्रहणरूपः, आचारस्तत्परिहरणपरिष्ठापनरूपो, न आचारोऽनाचारस्तद्ग्रहणमित्यर्थः, जात इति गम्यते, तस्य सर्वस्यानाचारस्य मिथ्यादुःकृतं भवतु, यन्मया दुःकृतं कृतं तन्मिथ्या भवतु. अयं च मिथ्यादुःकृतविधिर्बालपंडितमरणे पंडितमरणे पंडितपंडितमरणे च साधारण एव. अथ साधोरुद्यतविहारेण विहरतः कदाचिद्देवादिकृता आपत्स्यात्, नद्यादौ रोगादौ वा तस्यां जीवितसापेक्षस्य साकारप्रत्याख्यानमाह—एस० एषोऽहं सर्वसंघप्रत्यक्षः करोमि प्रणामं नमस्कारं जिनवरवृषभस्य सामान्यकेवलिवृषभस्य वर्धमानाभिधस्य, न केवलमस्य शेषाणामपि वृषभा-

दिजिनानां, चशब्ददतीतानागतादिजिनानां सगणधराणां सर्वेषां, चशब्दान्निजनिजसंघसमेतानां ॥ ११ ॥ व्रतोच्चारणमाह—सव्वं॰ सर्वं प्राणारंभं प्रत्याचक्षे, अलीकवचनं च प्रत्याख्यामि, सर्वमदत्तादानं, सर्वं मैथुनं, सर्वं परिग्रहं, चैवशब्दाच्च शेषपापस्थानान्यपि प्रत्याख्यामीत्यर्थः ॥ १२ ॥ ततः किं भणति? सम्मं॰ साम्यं समता मे मम सर्वभूतेषु सर्वजीवेषु, वैरं मम न केनापि सार्कं, आशाः सर्वाभिलाषरूपा व्युत्सृज्य त्यक्त्वा समाधिं मनःस्वास्थ्यं, चतुर्विधां वा विनयश्रुततपआचाररूपां वा अनुपालयेऽहमित्यर्थः ॥ १३ ॥ यदुत्सृजति तदेवाह—सव्वं॰ सर्वं चतुर्विधाहारविधिं त्यजामि, संज्ञाश्चतस्र आहारभयमैथुनपरिग्रहरूपाः; गौरवं त्रिविधं, कषायाश्च षोडशापि, सर्वं चैव ममत्वं प्रतिबंधं मूर्छां त्यजामि, सर्वमपि दृष्टादृष्टसाधुश्राद्धजनं क्षमयामीत्यर्थः ॥ १४ ॥ क्षामणानंतरं च किं भणतीत्याह—हुज्ज॰ भूयादस्मिन्नवसरे उपक्रमो व्ययो जीवितस्य यदि मम तदेतदेव प्रत्याख्यानं विपुलाराधनाहेतुर्भवत्वित्यर्थः ॥ १५ ॥ कृतसाकारप्रत्याख्यानश्च किं भणति? किं च श्रद्धत्ते इत्याह—सव्व॰ प्रक्षीणानि सर्वदुःखानि येषां ते तथा तेभ्यः सिद्धेभ्यो निष्ठितार्थेभ्यो नमोऽस्तु, न केवलं सिद्धेभ्योऽर्हद्भ्यश्च नमस्कारोऽस्तु, श्रद्दधामि जिनप्रज्ञप्तं तत्वमिति शेषः, प्रत्याख्यामि च पा-

पकं नित्यं कर्म सर्वमित्यर्थः ॥ १६ ॥ उक्तं साकारप्रत्याख्यानं, अथ पण्डितः क्षपको भक्तप्रत्याख्यानं कुर्वन् यद्भणति तदाह—नमु० नमो नमस्कारोऽस्तु धुतं गतं पापमष्टप्रकारं कर्म येषां ते तथा तेभ्यः सिद्धेभ्यः, चशब्दात्तीर्थकरेभ्यश्च, महर्षीणां च गणधरादीनां महर्षिभ्यः, संस्तारकं रचितदर्भसंस्तारकादिविधिना यदनशनं क्रियते तदप्युपचारात् संस्तारकमनशनं तं प्रपद्येऽहं यथा केवलिभिर्दर्शितमिति ॥ १७ ॥ तमंगीकुर्वन् किं किमभिधत्ते इत्याह—जं किं० यत्किमपि दुश्चरितमकृत्यं साधुभिरनासेव्यं तत्सर्वं व्युत्सृजामि त्रिविधेन मनसा वाचा कायेन, सामायिकं च संयमविशेषं त्रिविधं ज्ञानक्रियाश्रद्धारूपं सम्यक्त्वश्रुतचारित्रमित्यर्थः ॥ १९ ॥ इतोऽपि किं करोतीत्याह—रागमभिषंगं बंधहेतुत्वाद् बंधं रागलक्षणबंधमित्यर्थः, बंधशब्दः प्रतिपदं योज्यः, प्रद्वेषं च मत्सरमित्यर्थः, हर्षं स्वजनमेलापकादौ संघमेलापकादौ वा मम महती पूजा भविष्यतीति, दीनभावतां प्रत्यनीकापमानादौ, औत्सुकत्वं पीडोत्पत्तौ झटित्येव यदि म्रियेऽहमित्येवंरूपं, भयं देवाद्युपसर्गे सति, शोकमिष्टवियोगादौ, रतिं तथाविधानंदरूपां मनोज्ञशय्यादौ, अरतिं च नोकषायमोहनीयोदयजचित्तविकारद्वेषलक्षणां परीषहोपसर्गादौ व्युत्सृजामि ॥ २० ॥ मम एतदित्येवंरूपो भावो ममत्वं प्रति-

बंधं सर्वसारवस्तुषु इति ज्ञपरिज्ञया परिजानामि प्रत्याख्यानपरिज्ञया परिहरामि, किंभूतः सन्? निर्ममत्वमुपस्थित आश्रितः, तर्हि किमालंबनतया चिंतयतीत्याह—आलंबनं चाश्रयः मे ममात्मैवाराधनाहेतुरवशेषं शरीरोपध्यादि व्युत्सृजामि ॥ २१ ॥ केषु विषयेष्वात्मालंबनं विधेयमाह—आया० आत्मा मम ज्ञाने ज्ञानविषये आलंबनं, हुः स्फुटं भवतु. आत्मा मे दर्शनेऽप्यालंबनं, चारित्रेऽपि चात्मैव, तथा प्रत्याख्यानेऽपि भक्तपरिज्ञारूपे, संयमे सर्वविरत्यंगीकाररूपे, योगे च प्रशस्तमनोवाकायरूपे ममात्मैवालंबनं, यत एतत्साहाय्यात् साध्यानि ज्ञानदर्शनचारित्राणि, तानि चात्मनः कदाचिदपि न भिन्नानि, अत आत्मन उपादाने तान्यप्युपात्तानि ॥ २२ ॥ एवं च परित्यक्तसमस्तबाह्याभ्यंतरोपधिक एकत्वभावनां भावयति तामाह—एगो मे० एक एवात्मा मे मम शाश्वद्भवनादगमनाच्च शाश्वतः सहचारी, ज्ञानदर्शनयुक्तः, शेषा ये केचन मे मम बाह्या भावाः पदार्थाः पुत्रकलत्रादिकास्ते सर्वे संयोगलक्षणा एव कृत्रिममेलापका एव, येषां संयोगस्तेषामवश्यं भावी वियोग इति परमार्थः ॥ ४ ॥

कथं वियोगदुःखानीत्याह—संजो० संयोग एव मूलं यासां ताः संयोगमूलाः, जीवेन सांसा-

श्किप्राणिना प्राप्ता अनुभूता दुःखपरंपरा अनिष्टकष्टसंतत्यः, यस्मादेवं तस्मात्कारणात्संयोगसंबंधं समवायाभिलाषं सर्वं भावेन स्वाभिप्रायेण व्युत्सृजामि ॥ २५ ॥ एवं व्युत्सृष्टममत्वोऽपि प्रतिक्रांतमूलोत्तरगुणोऽपि पुनः किमाचष्टे इत्याह—मूल० मूलगुणाः प्राणातिपातविरमणादयः, उत्तरगुणाः पिंडविशुद्ध्यादयस्ततो द्वंद्वः, ये मूलोत्तरगुणा मया नाराधिता न सम्यक् परिपालिताः प्रमादेनाज्ञानादिनाष्टप्रकारेण तदहमनाराधनं सर्वं निरवशेषं निंदामि, आत्मसाक्षिकं मिथ्यादुष्कृतं वच्मि, आगमेष्याणामागामिनां मूलोत्तरगुणानां प्रत्याख्यामि. यतोऽतीतस्य निंदा, वर्तमानस्य संवरणं, अनागतस्य प्रत्याख्यानमभाणि, इति अन्यदपि यत्प्रतिक्रामति तदाह—॥ २६ ॥ सत्त० इहपरलोकादानाकस्मादाजीविकामरणाश्लोकभेदैर्भयानि सप्त, मदा अष्टौ, संज्ञाश्चतस्रः, गर्वाश्च त्रीन्, आशातना अर्हदाद्यास्त्रयस्त्रिंशत्, रागं द्वेषं च गर्हामि. ॥ २७ ॥ असं० असंयमं विराधनास्वभावमेकविधं अज्ञानं मूढतारूपं एकभेदमेव मिथ्यात्वं विपर्ययरूपं तदप्येकविधं तथा सर्वमेव ममत्वं, केषु? जीवेषु पुत्रकलत्रगोऽश्वादिषु, अजीवेषु हिरण्यवस्त्रादिषु तत्सर्वं निंदाम्यात्मसाक्षिकं गर्हामि गुरुसाक्षिकं, यदनाभोगादिना न प्रतिक्रांतमित्यर्थः ॥ २८ ॥ न केवलमेतदन्यदप्याह—निंदा० निंदामि

निंदनीयमसंयमकरणादि, गर्हामि यच्च मे मम गर्हणीयं, जुगुप्सितं पिंडग्रहणादि, तथा आलोचयामि च सर्वं निंदनीयं गर्हणीयं, अभ्यंतरां बाह्यामुपधिं ॥ २९ ॥ केन विधिनालोचयामीत्याह— जह० यथा बालो जल्पन् कार्यमकार्यं ऋजुकं निर्मायतया प्रांजलतया भणति स्वमातुः कथयति तत्तथैव तन्न्यायेनालोचयेत् गुरोः प्रकटयेन्मायां प्रच्छादनारूपां मृषां चान्यथाकथनरूपां प्रकर्षेण मुक्त्वा परित्यज्येति ॥ ३० ॥ यस्य गुरोः सकाशे आलोच्यते तस्य गुणानाह—नाणं० ज्ञाने पंचप्रकारेऽकंपोऽक्षोभ्यः सम्यक् तद्भेदित्वात्, दर्शने चाक्षोभ्यः क्षायोपशमिकः क्षायिकोपशमिकरूपे कारकरोचकदीपकवेदकरूपे वा निसर्गाभिगमरूपे वा इत्यादि तद्भेदप्रभेदवेत्ता, तपसि द्वादशप्रकारे स्वयंकरणसमर्थः, अन्यकारापणविधिज्ञश्च, चारित्रे च सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातरूपे चतुर्ष्वपि पुनः पुनरेकैकस्मिन् अकंपो दे वैरप्यचाल्यः, धीरो धैर्यमापादयिता, आगमकुशलः, आदिपदग्रहणादागमश्रुताज्ञाधारणाजीतव्यवहारनिपुणः, प्रतिश्रवतीत्येवं शीलः प्रतिश्रावी, अप्रतिश्रावी समुद्रवद्गंभीर इत्यर्थः, रहस्यानामालोचनालोचितानां, एवंविधस्य गुरोः पार्श्वे आलोचनीयमित्युक्तं ॥ ३१ ॥ कथमप्यालोचयता पुरो वा गुरोर्विरूपमाचरितं स्यात्तदाह—रा-

गेण० रागेण वा अतिप्रेमवशात् द्वेषेण वा प्रमादस्खलितादौ शिक्षितेन द्विष्टेन अकृतज्ञतया गुरुकृतोपकारगुणानभिज्ञेन च प्रमादेन वा अनाभोगेन वा यत्किमपि मे भवतां विरूपमाचरितं पूज्यानां सतां तत्सर्वं क्षमयामि, तथान्योऽपि मया यः किंचिद्विरूपोऽलीकोद्घटनादिर्भवतां भणितस्तमहं त्रिविधेन मनोवाक्कायेन क्षमयामि ॥ ३२ ॥ आलोचितक्षमितगुरुः क्षपकोऽनित्यभावनां भावयन् मरणस्वरूपं चिंतयंश्चाह—तिवि० त्रिविधं भणंति मरणं, बाला इव बाला अज्ञाना विरतिसाधकविवेकविकलत्वात्, असंयता अविरताः सम्यग्दृष्टिपर्यंतास्तेषां बालानां, तथा अविरतत्वेन बालाः, देशविरतत्वेन पंडितास्तेषां बालपंडितानां च, तृतीयं पंडिता बुद्धतत्वाः संयता इत्यर्थः, तेषां मरणं पंडितमरणं, यद् यस्मात्केवलिनोऽनुम्रियंते ॥ ३३ ॥ मरणस्वरूपं विज्ञाय समाधिमरणेन मर्तव्यं, असमाधिमरणेन दोषानाह—जे० ये पुनर्जीवा अष्टौ मदस्थानानि येषां तेऽष्टमदिकाः, प्रचलिता विषयकषायादिभिः सन्मार्गात् परिभ्रष्टा संज्ञा बुद्धिर्येषां ते प्रचलितसंज्ञाः प्रगलितसंज्ञा वा, वंच्यते स्खल्यते आत्मा परो वा ऐहिकपारलिकलाभस्य येन स वक्रः अथवा वंकः कुटिलः, वक्रो वंको वा भावो येषां ते वक्रभावाः, यदेवंविधा अत एवाऽसमाधिना चित्तास्वास्थ्यरूपया म्रि-

यंते, नहु नैव आराधका उत्तमार्थसाधका भवंति ॥ ३३ ॥ यदि च नाराधकास्ततः किमित्याह—मरणे॰ मरणे विराधिते निदानकरणादिना देवदुर्गतिर्भवति, दुर्लभश्च दुःप्रापश्च किलेत्याप्तोक्तौ, बोधिः सम्यक्त्वबीजं भवति, संसारश्चानंतोऽनंतपुद्गलपरावर्तपरिभ्रमणरूपो भवति, चशब्दान्मरणमप्यनंतं भवति आगमेष्यकाले ॥ ३४ ॥ शिष्य आह—कादे॰ का देवदुर्गतिः? का वा अबोधिः बोधिदुर्लभता? केनैव प्रकारेण हेतुना विशेषेणोद्यते व्युह्यते पुनःपुनर्जीवेन मध्यसमागतभारवदकामेनापि स्वीक्रियते मरणं? अनंतः पारः पर्यंतो यस्य कालस्य तमनंतपारं कालं, केन हेतुना संसारे हिंडते जीवः? ॥ ३५ ॥ प्रथमप्रश्नोत्तरमाह—कंद॰ कंदर्पोऽट्टहासहसनं कंदर्पकरणशीलाः, कंदर्पाश्च ते देवाश्च कंदर्पदेवाः, ये पुरा यद्विधा भवंति ते तद्विधेषु गछंति, ' जल्लेसे मरइ तल्लेसे उववज्जइ ' इति वचनात्. इति कंदर्पदेवरूपा दुर्गतिः, किल्बिषं पापं ज्ञानाद्याशातनादिकं, तद्योगाद्देवा अपि किल्बिषिकाः, अभियोजनं अभियोगः शत्रूच्चाटनादिमंत्रप्रयोजनं तद्योगाद्देवा अपि अभियोगाः, आसुरेण चंडकोपेन चरंत्यासुरिकाः, देवा अपि देवरूपा दुर्गतिः, संमोहयंति उन्मार्गदर्शनादिना मार्गान्मोक्षमार्गाद् ह्रसयंति ये ते संमोहाः, संमोहरूपा देवदुर्गतिः, ता एता

देवदुर्गतयो मरणे विराधितेऽपध्यानादिना भवंति ॥ ३६ ॥ द्वितीयप्रश्नोत्तरमाह—मिछा० मिथ्यात्वदर्शनं मिथ्यात्वं, तत्र रताः, सनिदानाः, कृष्णलेश्यामवगाढाः प्राप्ताः, इहास्मिन् जगति ये जीवा म्रियंते तेषां दुर्लभो बोधिर्भवेत् ॥ ३७ ॥ सम्म० सम्यग्दर्शने रक्ता भावितांतःकरणा अनिदाना निदानवर्जिताः शुक्ललेश्यामवगाढाः शेषं पूर्ववत् ॥ ३८ ॥ केनानंतपारमाह—जेपुण० ये पुनर्गुरुप्रत्यनीकाः खिंसकाः, त्रिंशन्मोहनीयस्थानवर्तिनो बहुमोहाः, सह सबलैरेकविंशत्याः सबलस्थानैर्वर्तंत इति सबलाः, कुत्सितं शीलं समाचारो येषां ते कुशीलाः, असमाधिना आर्तरौद्रतया ये म्रियंते तेऽनंतसंसारिणो भवंतीति ॥ ३९ ॥ जिण० जिनवचनानुरक्तास्तद्भावितमनसः गुरुवचनं ये कुर्वंति भावतो हितमिति कृत्वा असबलाः सबलस्थानदूरवर्तिनः, असंक्लिष्टा विशुद्धाध्यवसायास्ते परित्तसंसारिणः स्तोकसंसारिणो भवंति. ' केणेव वुच्चइ मरणं ' इत्यस्य निर्वचनं गाथाद्वयेनाह—बाल० ये वराका जिनवचनं न जानंति ते बालमरणानि शस्त्रग्रहणादीनि बहुशोऽनेकशो मरिहंति मरिष्यंति, तथा बहूनि अकामुकानि निरभिलाषाणि मरणानि, केचिद्वराका महारोगादिदुःखपीडिता अनिच्छंतो मरिष्यंति जिनवचनबाह्याः संतः ॥ ४१ ॥ ४२ ॥ सत्थ० शस्त्रग्रहणं तीर्थादौ मस्तके

क्रकचदापनं, शिरःसारणादिविषभक्षणं, वैराग्याज्ज्वलनप्रवेशः काष्टभक्षणं पंचाग्नितपश्च, जलप्रवेशश्च तीर्थे पयसि निमज्जनं कंठस्नानं वा माघमासे, चशब्दादन्यदप्येवंविधं उद्बंधनादिबालमरणं ज्ञातव्यं. एतानि बालमरणानि के मरिष्यंतीत्याह—अणायारत्ति आचारः शास्त्रविहितो व्यवहारस्तेन भांडमुपकरणं आचारभांडोपकरणं, न आचारभांडोपकरणं अनाचारभांडोपकरणं तत्सेवितुं शीलं येषां तेऽनाचारभांडसेविनस्ते च परिव्राजकादयो मिथ्यादृष्टयः, कथंभूतानि? जन्मानि च मरणानि च जन्ममरणानि, तान्यनुबध्नंति इत्येवंशीलानि जन्ममरणानुबंधीनि बहूनि मरिष्यंति ॥ ॥ ४३ ॥ क्व मरिष्यंतीत्याह—उड्ढ० ऊर्ध्वं भूतलान्नवयोजनशतादुपरि समग्रोर्ध्वलोकः, अधोऽधोग्रामादौ सर्वपृथिवीषु, तिर्यग्लोकेऽपि चाष्टादशयोजनशतमाने भूतान्यनुभूतानि जीवेन बालमरणानि पूर्वोक्तानि, यदि चानुभूतानि ततः किं विधेयमित्याह—दंस० गाथार्द्ध—स चैव क्षपको विज्ञातबालमरणविपाकश्चिंतयामास—दर्शनज्ञानसमन्वितः सन्नहं पंडितमरणं विवेकमरणमनुसरिष्ये ॥ ४४ ॥ गुरुः क्षपकस्य दुर्गतिभयं दर्शयन्नुपदेशमाह—उव्वे० हे वत्स विराधितव्रतस्य उद्वेगजनकं भयानकं उद्वेगकारि किं? जननं जातिर्म्रियते मरणं तत्संसारे परिभ्रमतस्ते भविष्यंतीत्यध्या-

नरकास्तेषु वेदना छेदनभेदनादिका, एतानि संस्मरन् पं·
हारः, तथा पापकारिनरान् कांत्याद्रयंतीति नरकास्तेषु वेदना छेदनभेदनादिका, एतानि संस्मरन् पं·
डितमरणमभ्युद्यतमरणं म्रियस्वेदानीं ॥ ४५ ॥ गुरुणा श्रावितव्रतविराधनाविपाकश्चिंतयन्नाह—ज·
इ० यदि उत्पद्यते दुःखं तो ततो दृष्टव्यः स्वभावस्तत्प्रादुर्भावः, न वरं न पुनः कियद् दुःखमेत-
त्? पुरापि का दुःखपरंपरा मे मया मदे जात्यादौ आसक्तचेतसा संसारे संसरता परिभ्रमता सता
न प्राप्तानुभूता? ॥ ४६ ॥ संसा० संसारचक्रवाले भवचक्रे भ्रमता मया सर्वेऽपि पुद्गलाः समस्तोऽ·
पि पुद्गलास्तिकायो बहुश आहारिता आहारत्वेन गृहीताः परिणामिताश्च तद्रसवेदनेन, तथापि तैः
सर्वैराहारैराहारितैरपि नाहं तृप्तिं गतो न संतोषमापन्नः ॥ ४७ ॥ केन दृष्टांतेनाह—तण० यथा तृ·
णैः काष्ठैरिवाग्निः, लवणजलो लवणसमुद्रः वा इवार्थे, नदीसहस्रैः, तथा नायं जीवः शक्यस्तर्पयितुं
तृप्तीकर्तुं कामभोगैः ॥ ४८ ॥ तेषु गृद्धस्य दोषानाह—आहार आहारनिमित्तेनाहारेण हेतुना म·
त्स्यास्तंदुलमत्स्या गच्छंति यांति सप्तमीं पृथिवीं तमस्तमाभिधानां, अतः कारणात्सचित्तमाहारं मन·
सापि प्रार्थयितुं न क्षमते न सहते ॥ ४९ ॥ विज्ञातविषयविपाको भावितगुरूपदेशश्च क्षपको य·
द्भणति तदाह—पुव्विं पूर्वं प्रथमं चत्तारि विचित्ताइं इत्यादिक्रमेण कृतपरिकर्मा कृतोत्कृष्टमध्यमज·

घन्यद्वादशवर्षद्वादशमासद्वादशपक्षसंलेखनः अनिदानो निदानरहितः, ऊहिऊण वितर्क्य विचार्य मतिं तत्कालोत्पन्नां बुद्धिमुत्तरकालभाविनीं सूक्ष्मार्थपर्यालोचिकां पश्चाद् विचारणानंतरं दलितकषायो मर्दितसंपरायः सन् सद्यो झटिति मरणं पंडितमरणं प्रतीछाम्यंगीकरोमीत्यर्थः ॥ ५० ॥ येऽप्रस्तावेऽपरिकर्मिता वा अनशनं प्रतिपद्यंते तेषामपायमाह—अकं० अकांडेऽप्रस्तावेऽनवसरे ये आराधनां कुर्वंति चिरं प्रभूतं जीवितकालं परिकर्मित आत्मा यैस्ते चिरभाविताः कृतानवसराराधना अकृतयोगाराधनाः पुरुषा मरणदेशकाले मरणसमये पूर्वकृतकर्मपरिभावनातश्च प्राक्तनकर्मविपाकोदयतः पश्चात्प्रतिपतंति निदानादि कुर्वंति ॥ ५१ ॥ गुरूपदेशमाह—तम्हा० तस्मात्कारणाचंद्रकवेध्यं राधावेध्यं सकारणं राज्यादिलाभकृते केनापि सुरेंद्रदत्तकल्पेन राजपुत्रेण साध्यते, एवं त्वयापि चंद्रकवेध्यमिव चंद्रकवेध्यमनशनं सकारणं स्वर्गापवर्गफलाप्तकृते उदययुक्तेन सावधानेन साध्यमित्यर्थः, तर्हि कथं साध्यते जीवोऽविरहगुणः अमुक्तज्ञानदर्शनचारित्रगुणः कर्तव्य इत्यर्थः, मोक्षमार्गे ॥ ५२ ॥ बाहिर० बाह्ययोगैर्बाह्यसंबंधैर्गच्छोपकरणादिभिर्विरहितो वियुक्तः, अभ्यंतरध्यानयोगे ' जिणसाहुगुणकित्तण ' इत्यादि, अल्लीणोत्ति आश्रितस्तथा कर्तव्य इत्यध्याहारः, यथा तस्मि-

न्न देशकाले तस्मिन्नवसरे अमूढसंज्ञः सन् देहं त्यजेत् ॥ ५३ ॥ किं भविष्यतीत्याह—हंतूण० हत्वा रागद्वेषौ भित्वाष्टकर्मशृंखलां जन्ममरणारहट्टं भित्वा भवाद् वत्स मोक्ष्यसे त्वं ॥ ५४ ॥

एवं गुरुभिरुपदिष्टे स क्षपकः किं कुर्वते इत्याह—एव० एवमेतं वा सर्वमुपदेशं जिनदिष्टं श्रद्दधे त्रिविधेन मनोवाक्कायेन, त्रसस्थावरं क्षेमंकरं पारंतीरं निर्वाणमार्गस्य ॥ ५५ ॥ नहु० नैव तस्मिन् देशकाले पर्यंतसमये शिथिलीभवत्सु बंधनेषु शक्यः शकनीयो द्वादशविधः श्रुतस्कंधः सर्वोऽनुचिंतयितुं धणियं इत्यर्थमपि, समर्थचित्तेन ॥ ५६ ॥ एगं० एकस्मिन्नपि यस्मिन् पदे स्थानेऽधीते सति संवेगं मोक्षाभिलाषरूपं वीतरागमार्गे गच्छति नरोऽभीक्ष्णं तन्मरणं संवेगप्राप्तिरूपं तेन पदेन हेतुना मंतव्यं ॥ ५७ ॥ ततः किमित्याह—तम्हा० तस्मात्ततस्तावदेकमपि श्लोकं पंचपरमेष्टिरूपं यः पुमान् मरणकाले आराधनोपयुक्तः सन् चिंतयति स तं चिंतयन् स्मरन्नाराधको भवति ॥५८॥ आराधकः किं फलमाह—आराधनया उत्तमार्थप्रतिपत्त्या उपयुक्त उद्यतः कालं कृत्वा सुविहितः सुसाधुः सम्यगुत्कृष्टतोऽतिशयेन सम्यगाराधनां कृत्वा त्रीन् भवान् गत्वा लभते निर्वाणं ॥ ५९ ॥ एवं विज्ञाताराधनफलः कया वासनया सर्वं व्युत्सृजतीत्याह—सम० प्रथमं तावदहं श्रमणो महाव्र-

तांगीकारात कृततपःखेदः, द्वितीयं सर्वत्र समितिगुप्तित्वात संयतोऽस्मि निगृहीतेंद्रियः, अतः किं? ममैवंविधस्य सतः किं? प्रतिबंधेनाहाराभिलाषेण वा किं? तत्सर्वमपि व्युत्सृजामि. एतत्समासेन भणितं ॥ ६० ॥ क्षपको भावनां भावयन्निदमाह—लद्धं० लब्धं प्राप्तं अलब्धपूर्वं अप्राप्तपूर्वं पुरा अस्मिन् भवे परिभ्रमता मया न कदाचिदेतदाराधनावस्तु अनुभूतमित्यर्थः, किंविशिष्टमित्याह—जिनवरमते सिद्धांते सुष्टु अतिशयेन भाषितं प्रतिपादितं, जिनवचनसुभाषितममृतभूतं, अत एव च गृहीतो लब्धः सुगतिमार्गो मोक्षमार्गः, नाहमिदानीं मरणस्य बिभेमीत्यर्थः ॥ ६१ ॥ धीरे० धीरेणापि सुभटेनापि सता मर्तव्यं, कातरेणापि मर्तव्यं, दुःशीलेनापि भ्रष्टप्रतिज्ञेनापि मर्तव्यं, द्वाभ्यामपि प्रकाराभ्यां हु स्फुटं मर्तव्यमेव, तस्माद् वरं खु निश्चयेन धीरत्वेन युक्तमित्यर्थः ॥ ६२ ॥ शील० शीलयोगात्पुरुषः शीलः, शीलेनाप्तसमाचारेण पालितनिजप्रतिज्ञेनापि मर्तव्यं, दुःशीलेनापि भ्रष्टप्रतिज्ञेनापि मर्तव्यं, द्वाभ्यामपि भेदाभ्यां मर्तव्यं, खु तस्मादर्थे वरं शीलत्वेन मर्तुमित्यर्थः ॥ ६३ ॥ इति स्थिरीभूते क्षपके गुरुः सामान्योपदेशफलद्वारेण गाथापंचकेनाह—नाण० ज्ञानस्य विशेषोपयोगरूपस्य, दर्शनस्य सामान्योपयोगस्य, सम्यक्त्वस्य निःशंकिताद्यष्टप्रकारस्य, चारि-

त्रस्य समितिगुप्तिभेदतोऽष्टभेदस्य यः साधुः काहि करिष्यत्युपयोगं सावधानत्वं स मुनिः संसाराद्वि-
मोक्ष्यते ॥ ६४ ॥ चिर० चिरमुषितं ब्रह्मणश्चरणं ब्रह्मचारः, चिरोषितो ब्रह्मचारो येन स चिरोषित-
ब्रह्मचारी प्रस्फोव्य विधूय शेषकं पूर्वक्लिष्टोद्धरितं कर्म ज्ञानावरणादि आनुपूर्व्या क्रमेणोत्तरोत्तरगु-
णस्थानाधिरोहणतो विशुद्धो याति सिद्धिं धूतक्लेशः ॥ ६५ ॥ निक० निःकषायस्य, दांतस्य, शूर-
स्य मोहमल्लजये, व्यवसायिन आराधनापताकालाभाय, संसारपरिभीतस्य प्रत्याख्यानं शुभं भवेत्
॥ ६६ ॥ एयं० एतदध्ययनरूपं प्रत्याख्यानं यः कोऽप्यन्योऽपि करिष्यति मरणदेशकाले धीरो वि-
द्वान् न मूढा मूर्छिता संज्ञा ज्ञानं यस्य सोऽमूढसंज्ञः संपूर्णज्ञानः स गच्छति उत्तमस्थानं मोक्षस्था-
नं ॥ ६७ ॥ धीरो० वीरस्तीर्थकृज्जरामरणवित धीरो विज्ञानं केवलज्ञानं, ज्ञानं सामान्यावबोधरूपं,
ताभ्यां संपन्नः संयुक्तो लोकोद्योतकारो दिशतु करोतु क्षयं विनाशं सर्वदुरितानां सर्वपापानां सर्व-
कर्मणामित्यर्थः ॥ ६८ ॥ यतोऽस्यापि प्रकीर्णकस्य वीरभद्रः कर्ता श्रूयते. ॥ इत्यातुरप्रत्याख्यानप्र-
कीर्णकावचूरिः समाप्ता ॥ श्रीरस्तु ॥

---

अथ भक्तपरिज्ञाप्रकीर्णकावचूरिः प्रारभ्यते—भृञ् धातुर्धारणे पोषणे च, अत आत्मनः स्मृतये परस्य च अथवा स्वस्य परस्य च पुण्यक्रमस्य पुष्टये ॥ १ ॥ आलीना आश्रिताः, काननवत् शुभदं सुखदं वा ॥ २ ॥ अद्य आर्येति संबोधनं वा ॥ ४ ॥ ता तस्मात ॥ ५ ॥ यत् आज्ञाया आराधनं सुखसाधकं भवति तस्यां आज्ञायां ॥ ६ ॥ तं ततः तत्प्रसिद्धं वा यद् ज्ञानादीनामाराधनं, इदं ॥ ७ ॥ आराधयन्नपि चारित्रं सम्यक् संपूर्णं ॥ ८ ॥ जिनैः ॥ ९ ॥ सत्यायुषि संलेखनादिना कृतायुष्कोपक्रमणस्य सविचारं, आयुषः कालेऽपर्याप्यमानेऽकृतसंलेखनस्याविचारं ॥ ११ ॥ विकलानां अकृतसंलेखनानां, भक्तपरिज्ञामरणमद्यकालीनयतियोग्यं ॥ १२ ॥ प्रशमसुखे सतृष्णः शोकहासरहितः ॥ १३ ॥ निश्चिता मरणावस्था येन, भव्यो योग्यो भक्तपरिज्ञायां, ज्ञातसंसारनैर्गुण्यः ॥ १४ ॥ परद्धः पीडितः, दोषग्रहणे सतृष्णः, अर्हति पार्श्वस्थादिकोऽपि, स्वयं दोषैर्दूषितोऽपि ‘ पासत्थाईवि दोसदोसिल्ल ’ इति पाठे तु दोषदौःशील्यकलितोऽपि ॥ १५ ॥ अहो पर्यालोचने ॥ १६ ॥ त्वं तद्वानशनं ॥ १७ ॥ संवेगो मोक्षाभिलाषः, निर्वेदः संसारे विरक्तिः ॥ २१ ॥ बालवदालोचयति ॥ २२ ॥ आचार्येण, येनोत्सारकग्रंथवाचना कृता भवति, अंगीकृत्य ॥ २३ ॥

दारु० दारुणदुःखान्येव जलचरास्तेषां निकरेण, भीमः, महाव्रतान्यस्माकमुत्क्षिपस्व? ॥ २४ ॥ यद्यपि खंडित उपशमितश्चंडको येन, अविराद्धमहाव्रतः, प्रव्रज्याव्रतोपस्थापिकां व्रतस्मारिकां ॥ ॥ २५ ॥ राज्ञः सुष्टुकृतामाज्ञां प्रत्यर्पयति ॥ २६ ॥ जो सो० आकुट्टिदंडेन उपेत्य इत्यर्थः, कृतव्रतभंगः ॥ २७ ॥ तत्तो० महाव्रतपर्वतभारावनमच्छीर्षस्य ॥ २८ ॥ अह० व्रतवान् श्रावकः ॥२९॥ अनि० अनिदानः राय १ गा २ त्था ३ पुरिसो ४ । बहुरय ५ सुरय ६ अरय ७ सुरातिन्नि ॥ सड्ढो ८ दरिद्दगेहे ९ । एए उ नवनियाणाइं ॥ १ ॥ ॥ ३१ ॥ सोऽपि संस्तारकः प्रव्रज्यां नियमनिरवद्यां प्रतिपद्यते ॥ ३३ ॥ अहसो० असंजातोपस्थापनो यतिः ॥ ३४ ॥ गुरु० अनुमतां ॥ ३५ ॥ आरा० आराधनायां क्रियमाणायां तस्य क्षपकस्य आत्मनश्च कुशलमवलोकयति, दिव्येन प्रधानेन निमित्तेनांगचेष्टासदृशवस्तुग्रहणदर्शनोपश्रुत्यादिना, अथवा दिव्येन देवतासंबंधिना निमित्तेनादेशादिना, इतरथा दोषोऽनशनं ददतः ॥ ३६ ॥ किंचत्त० मे मया उपभुक्तं सत् किं न चत्तं त्यक्तं मलादिरूपेण, अपि तु सर्वं त्यक्तं, यतः शुच्यपि परिणामेनाशुचि स्यात्, दृष्टसारो ज्ञाततत्वः सन्, नोदनाप्येषाधिकृतश्लोकार्थरूपा क्रियते सीदतः सतः ॥ ३९ ॥ उअर० विरेचनं कार्यः ॥४०॥

आराह० क्षपकस्य आराधनाप्रत्ययं निरुपसर्गप्रत्ययं च करेमि काउस्सग्गं उस्सासा २५६ ॥ ४४ ॥ पच्च० तं क्षपकं ते गुरवः ॥ ४५ ॥ अहवा० स साकारं भवचरिमं करोति ॥ ४६ ॥ आरा० कलुषं पापं तदेव कलः कर्दमस्तन्निवारणाय यष्टिं ॥ ५२ ॥ कुग्गह एव प्रकर्षेण रूढं मूलं यस्य भावयस्व ॥ ५३ ॥ सुवि० हितचिंतकः ॥ ५५ ॥ उम्म० मोहोऽज्ञानं तेन प्रौढीकृतं शोभनकर्मणामतिशयेन शल्यं, दमय इंडियमृगेंद्रान मुनींद्रसंदोहसंनिंदितान् ॥ ५६ ॥ निवा० निर्वाणसुखस्यापायान्, विस्तीर्णो नरकादिषु दारुण आसमंतात् पातः पतनं पाको वा स्वविपाको यैः, विषयतृष्णायाः सदा सहायान् ॥ ५७ ॥ काले मरणेऽप्राप्नुवति श्रामण्ये सावशेषिते ॥ ५८ ॥ मिय० स्वतृष्णया हेतुभूतया मृगतृष्णाम्भिस्तोयं मन्यंते, तथैव मिथ्यात्वमूढमनसो जीवाः कुधर्मात् सौख्यानि मन्यंते ॥६०॥ पाव० तुरमिण्यां नगर्यां यज्ञफलपृच्छकदत्तवत् ॥ ६२ ॥ मा० मा कार्षीस्त्वं, यस्मात्कारणात् ॥ ६३ ॥ भावा० भावानुरागरक्तः प्रेमानुरागरक्तः स्वगुणानुरागरक्तः ॥ ६४ ॥ दंस० दर्शनभ्रष्टो यः स भ्रष्ट एव, चरणभ्रष्टस्तु न परिभ्रष्टो भवति, दर्शनमनुप्राप्तस्य पर्यटनं नास्ति संसारे ॥ ६५ ॥ कल्ला० नार्घति अमूल्यमित्यर्थः ॥ ६८ ॥ विज्जा० निवृत्तिर्विद्या पुनरभक्तिमतः किं सेत्स्यति? अपितु न ॥७१॥

तेसिं० जिनानां, ऊषरे ॥ ७३ ॥ बी० शस्यं, वासं वृष्टिं, अग्रेण विना ॥ ७४ ॥ आरा० अनन्यहृदयः, त्वं मा मोहयसि पंचपरमेष्ठिनमस्कारं ॥ ७६ ॥ भाव० भावेन न कृतं करणं क्रियया येषु ॥ ॥ ७९ ॥ आरा० आराधनैव पताका तस्या ग्रहणे नमस्कार एव हस्तः, रथोऽस्खलितः ॥ ८० ॥ वि० सुप्रयुक्ता, पुरुषस्य वशं पिशाचं ॥ ८२ ॥ जह० स्थातुं, आलंबनैः ॥ ८४ ॥ तम्हा० उत्थातुकामः ॥ ८५ ॥ खंभ० खंभैर्विंशकलितैः श्लोकैः, यवो राजर्षिः सुश्रामण्यं प्राप्तः सन् ॥ ८७ ॥ तुंगं मेरोरपरं उच्चं नास्ति ॥ ९१ ॥ आत्मकामैः ॥ ९३ ॥ जं किं० सुखमुदारं ॥ ९५ ॥ पाणो० पाणोऽपि श्वपाकोऽपि पाडिहेरं देवसान्निध्यं प्राप्तः, एकेनाहिंसागुणेन एकदिनार्जितेन, यथा श्वपाकगृहे केनापि गोवधः कृतस्तेनालीकेन पूर्वं तद्दिनप्रतिपन्नाहिंसाव्रतः श्वपाको हृदे क्षिप्तस्तेनाहिंसाव्रतगुणेन प्रातिहार्यं प्राप्तः, ॥ ९६ ॥ परि० अभूतोद्भावनं भूतनिह्नवोऽर्थांतराभिधानं गर्हावचनं च ४ सर्वगत आत्मा १ नास्त्यात्मा २ गामश्वं ब्रूते ३ काणं काणमेवाह, दम्यंतां बलिबर्दादय इत्यादि वा परलोकविरुद्धं ४ ॥ ९७ ॥ हासे० स्वजीवहिताय ॥ ९८ ॥ वि० माता इव ॥ ९९ ॥ होउ० शिखावान् भागवतादिः ॥ १०० ॥ अलि० सकृदपि ॥ १ ॥ मा० कुण किलिं वंशशलाकादिकं ल-

घु दारु ॥ ५ ॥ चोरि० किढिडे किरिस्तफेहे उत्सवदिने राज्ञो लब्धप्रसादा गोष्टी, चौरास्तन्मध्ये, पूर्वं गृहीतादत्तादाननियमपुरुषवर्जं सर्वे प्रविष्टास्तद्गृहं, तैर्मुषितं, तया तु तैरज्ञातया ते पादेषु मयूरपिच्छेन चित्रिताश्चिह्निताः, प्रगे तया राज्ञो निवेदिते ज्ञाता दंडिताश्च, इतरस्तु पूजितः ॥ ६ ॥ रक्ता॰ दोषप्रचुरं ॥ ७ ॥ जाव० आवहति धारयति ॥ ८ ॥ रइ० काम० कामसर्पेण दष्टा इति संबंधः, युगेन, संकल्पो मनसा संकल्पनं, विषयाः शब्दादय एव बिलं, मदा एव मुखानि यस्य तेन, त्याज्यत्वेन लज्जैव निर्मोकः सर्पकंचुको यस्य, सर्पोऽहंकारविशेषः, विनश्यंति, दुस्सहमावहतीति दुस्सहं, तच्च तद्विषं च योगैकाग्रतारूपं तेन ॥ ९ ॥ १० ॥ लल्ल० लल्लको भीषणो नरकः, अथवा षष्ठ्यां पृथिव्यां तृतीयप्रस्तटे लल्लकाख्यो नरकावासः, कामेन स्त्रीणामपि तत्र गमनादिति स प्रदर्शितः, उव्वसनं ॥ ११ ॥

कामा० मगधासु गोर्बरग्रामे गोशंखी कौटुंबिकः, तेनासन्नभग्नग्रामे वहिरपत्यं दृष्ट्वाऽपुत्रत्वाद्गृहीतं वर्धितं च, तन्माता चंपायां चौरैर्विक्रीता वेश्या जाता, स तत्र यौवने तां गच्छन् गोवत्सरूपदेवीसंकेतेन मातरं ज्ञात्वा पृष्ट्वा विमोच्य प्राणायामां दीक्षां जग्राह, स वैश्यायनर्षिः कूर्मग्रामे

आतापयन् यूकाशय्यातर इति गोशालेनोक्तस्तेजोलेश्यां मुक्तवान्, स्वामी च तस्य रक्षार्थं शीतले-श्यां, आतापनापरश्च स नखकुल्माषपिंडी उष्णोदकैकचुलुकात् षण्मास्या तेजोलेश्येति सिद्धार्थदे-वात् श्रुत्वा गोशालः श्रावस्त्यां कुंभकारशालायां तां साधितवान्, अष्टांगनिमित्तं शिक्षितवांश्च. अ-जिनो जिनप्रलापी भ्रमति. निजमातृसुरते रतिरासक्तिस्तव रक्तः ॥ १३ ॥ पडि० प्रतिपूर्य काम-कलहं, प्रतिबंधं स्वभावं पश्यन् ॥ १४ ॥ महि० विषयांधाः ॥ १५ ॥ नीयं० नीचपुरुषगामिभिः, सुस्त-नीभिः, प्रेक्षणीयमंदगतिभिः, स्थैर्यादिगुणोपेता अपि भिद्यंतेऽधरीक्रियंते, नदीपक्षे तु नीचैर्गच्छंती-भिः सुजलजलधाराभिः क्वचनात्यकुलं क्वचन च स्तिमितं वहंतीभिः, गिरिवरेषु गिरिवरा विंध्या-चलादयः ॥ १६ ॥ सु० जितासु परिचितासु, गारुडिकानां सर्पिण्यः प्रियाः स्युः ॥ १७ ॥ वीसं० अतिविश्वसंतमपि, कृतविप्रियं प्रियं पतिं ॥ १८ ॥ रम० स्त्रीणां दर्शनमेव सुंदरं भवति, न तूपभो-ग इति मालत्योपमानं, सौभाग्याद्यैः सूत्रैश्च मालतीजातिः ॥ १९ ॥ किंतु० दर्शनसौंदर्यजनित-मोहानां वध्यस्य कंठे प्रक्षेपार्हा कणवीरादिमाला वध्यमालास्तासामिव ‘ वज्झमालाएव ’ पाठे तु वज्रमालाः पुरुषराक्षसास्तेषामिव स्त्रीणामालिंगनं अचिराद्विनाशं ददाति, अन्ये त्वेवं व्याख्यांति, आ-

लिंगनं मदिरावत् यथा वज्रमाला द्वीपोत्पन्नानां पुरुषाणां मदिरा विनाशं ददाति, तथा स्त्रीणामालिं-
गनं धर्मकारिणां पुरुषाणां चारित्रनाशं करोति ॥ २० ॥ रम० स्त्रीणां दर्शनमेव सुंदरं भवति, त-
त्संगमसुखेनालब्धेन, लब्धे तु तत्र स्वकायश्रमग्लानिबलहान्यादय एवावशिष्यंते नत्वन्यत् ॥२१॥
साके० क्षिप्तो नद्यां व्यूढश्च देव्येति, क्रमेण संबंधः ॥ २२ ॥ सोच्छ० शोकस्य सरिन्नदी, वैरोचनो-
ऽग्निः ॥ २३ ॥ अमु० सम्यग् अज्ञातस्वमनोनिग्रहविधानः, दृष्टिविक्षेपे ॥ २४ ॥ घण० मेघमालाः,
यथाऽलर्को रोगाघ्रातः श्वा, तद्दंशविषं वर्धयंति अतिशयेनोन्नताः सत्यः, तथा स्त्रियोऽपि दृष्टा मो-
हविषं वर्धयंति दूरमतिशयेनोन्नतीभवंत्यः ॥ २५ ॥ मह्हि० यत् यस्मात् अल्पसारस्याल्पसत्वस्य, अ-
ग्नेः संसर्गेण मदनमिव मनो विलीयते ॥ २६ ॥ जह° कोशाभवनोषित ऋषिः ॥ २७ ॥ सिंगा°
ब्रुवंति ॥ २८ ॥ विस० कल० कर्दमः, विलासा नेत्रजा विकाराः, बिब्बोका गर्वादिष्टेऽप्यवज्ञा, त
एव जलचरास्तैराकीर्णं, मच्छ एव मकरा यत्र ॥ ३० ॥ अभिं° मिच्छत्तं वेयतियं । हासाइछक्कयं तु
नायवं ॥ कोहाईण चउक्कं । चउदस अप्भंतरा गंथा ॥ १ ॥ खित्तवत्थुधणधन्न । उपयाइं संग-
हो ४ ॥ ३१ ॥ संग० मूर्छामिच्छंत्ति पाठे इच्छां अपरिमाणां ॥ ३२ ॥ संगो° संगः परिग्रहो महाभ-

यनिमित्तत्वात् महाभयं, बाधितः कुंचिकेन मुनिपतिमुनिः ॥ ३३ ॥ सव० परिग्रहचिंता संतोषान्ना-
वेन, मुक्तिर्निर्लोभता तस्याः सुखं तत्सौख्यं ॥ ३४ ॥ निस्स० निःशल्यस्य मुनेः, संपूर्णा अतिचा-
रव्रणरहिता गुणा येषां महाव्रतानि ॥ ३५ ॥ अह० रागगर्भ १ द्वेषगर्भ २ मोहोऽज्ञानं तद्गर्भं ३
॥ ३६ ॥ रागे कृष्णजीवो दृष्टांतः ॥ ३७ ॥ इंदि० सुशीलगुणा मूलोत्तरगुणास्त एव पेहुणानि पि-
च्छानि तैर्विहीनाः ॥ ४१ ॥ न० स्वकः स्वकीयः ॥ ४२ ॥ महि० स्वकदेहपरिश्रममेव सौख्यं ॥४३॥
सु० कदल्यां ॥ ४४ ॥ सोए० प्रोषितस्य प्रिया कुरूपपुष्पसालगीतासक्ता राज्ञीं दृष्ट्वा गंधाद्गमारिक-
लंकादिकारी, गंधप्रियो विमातृगंधैर्मृतः, नृमांसाशी ॥ ४५ ॥ फासिं० अमात्यैर्बहिःकृतः, वसंतपुरे
जितशत्रुः सुकुमारिकारक्तोऽमात्यैरटव्यां मुक्तः सन्नार्यः, तत्र तस्य रुधिरं मांसं च दत्तं, पंगुकृते त-
या राजा गंगायां वाहितः. बाहुभ्यां शोणितं पीत—मूरुमांसं च भक्षितं ॥ गंगायां वाहितो भर्ता
। साधु साधु पतिव्रते ॥ १ ॥ ॥ ४६ ॥ विस० रत्नद्वीपदेवीस्थानप्राप्तजिनपालितजिनरक्षितवत्, दे-
वी, दीवसमागय नाह । अह अलं व भणियं व ॥ इत्युत्तरार्धपाठांतरं वा ॥ ४७ ॥ ज० विषयेषु
।नरपेक्षेण ॥ ४८ ॥ ता धीर० उत्खातक्रोधादिः प्रतिपक्षः सन् गृहाण ॥ ५० ॥ कोहो० कलीन

संग्रामान् कंदलानित्यर्थः ॥ ५१ ॥ इंगा॰ भवरूपपंकतरणे यष्टिं ॥ ५५ ॥ भालुंकी॰ शिवया साप-त्यया ॥ ६० ॥ मुच्चि॰ चित्रकूटपर्वते सिद्धार्थो, मोक्षो दयितोऽभीष्टो यस्य स तथा ॥ ६१ ॥ गुढे॰ सुबंधुनामात्येन ॥ ६२ ॥ इय॰ योगिनामीश्वरो जिनो वीरस्तस्य सुभणितानुसारेण, वीरभद्रगणि-भक्तपरिज्ञाप्रकरणकर्ता च. इणमो इमां ॥ ७१ ॥ इति भक्तपरिज्ञावचूरिः समाप्ता ॥

---

॥ अथ संस्तारकप्रकीर्णकावचूरिः प्रारभ्यते ॥

एष संस्तारकः किलाराधना चारित्रस्याराधनं, एष मनोरथो वांछा सुविहितानां, एष किल प-श्चिमांते सुविहितानां पताकाहरणं यथा मल्लानां पताकाहरणं भवति ॥ २ ॥ यथा भूतिग्रहणं न-कानां तापसविशेषाणां उत्सवकरणं भवति, अथवा न्यक्कृतानां पुंसां पराभूतानां विभूतिलाभः प्र-मोदाय भवति, यथा मल्लानां पताकाहरणं उत्सवाय तथा सुविहितानां शोभनानुष्ठानानां संस्तारक उत्सवाय भवति, यथा पुरुषसिंहानां चक्रवर्त्यादीनां मध्ये अर्हन् पुरुषवरपुंडरीकः, महिलानां मध्ये जिनमातरः ॥ ५ ॥ सर्वसौख्यानां मध्ये सिद्धिसौख्यं प्रधानं ॥ ६ ॥ यथा धर्माणां मध्येऽहिंसा, ज-

नपदवचनानां मध्ये साधुवचनानि, श्रुतीनां श्रूयमाणत्वेन शास्त्राणां मध्ये जिनवचनं, जलादिशुद्धीनां मध्ये सम्यक्त्वशुद्धिः प्रधानं तथा संस्तारकः ॥ ७ ॥ उत्तरगाथातः पंडितमरणमत्राभिसंबध्यते, पंडितमरणं कल्याणं अभ्युदयश्च, तयोर्हेतुत्वेन देवानामपि पंडितमरणं त्रिभुवनेऽपि दुर्लभं ॥ ८ ॥ मल्लो० मल्लं जित्वा पताकां लभते तथा कर्मजयेन सिद्धिर्लब्धा ॥ ९ ॥ ध्यानानां मध्ये परमं प्रकृष्टं शुक्लध्यानं, निर्वाणानां सुमरणानां मध्ये परिनिर्वाणं मोक्षः, अथवा सर्वथा कषायाग्न्युपशमात् परिनिर्वाणं यथाख्यातचारित्रं यथा मोक्षकारणं तथा पंडितमरणं क्रमेण मुक्तिहेतुर्भणितं ॥ ॥ १० ॥ आस्तां संस्तारकः सर्वोत्तमसर्वलाभानां श्रामण्यमेव यत्नाज्ञं मन्यंते, यथा सर्वस्तीर्थंकरः किंभूतः परमज्ञानः परमसिद्धिश्चेति. अथवा येन श्रामण्येन तीर्थंकृत्त्वं केवलज्ञानं मुक्तिर्वा प्राप्यते इति ॥ ११ ॥ परलोकहिते रतानां क्लिष्टमिथ्यात्वादिकर्मणां मोक्षतरोर्मूलमिव मूलं सम्यक्त्वं, तथा संयमो देशसंयमो, वाशब्दात् सम्यग् ज्ञानं च, एष महान् लाभः, परं तत्रापि सर्वोत्तमलाभानां श्रामण्यमेव विशिष्टं लाभं विवेकिनो मन्यंते ॥ १२ ॥ संयम एव पाठांतरे तु संयमोपाय एव ज्ञानादिमुक्तिकारणमध्ये तथा प्रधानं मूलं कारणं सतोरपि ज्ञानदर्शनयोस्तत्सद्भाव एव मुक्तिभावात्,

इति तिसृभिर्गाथाभिः श्रामण्यस्य प्राधान्यमुक्तं, किमुत संस्तारकस्येति भावः ॥ १३ ॥ सर्वतीर्थानां लौकिकानां मागधवरदामप्रभासादीनां, लोकोत्तराणां अष्टापदादीनां मध्ये च तीर्थकरप्रकाशितं तीर्थं श्रीसंघप्रवचनलक्षणं प्रधानं, अन्याभिषेकाणां मध्ये देवताकृतो जन्माभिषेको यथा प्रधानस्तथा संस्तारकः सुविहितानां ॥ १४ ॥ श्वेतचामरप्रभृतिमंगलानि तेषां मध्ये संस्तारकोऽधिकं मंगलं ॥ ॥ १५ ॥ तपोऽग्नौ कर्मकाष्टदहके, व्रतेषु नवकर्माबंधहेतुषु शूराश्चारित्रिण इत्यर्थः, जिनवराणां सम्यग्ज्ञानमेव आ सामस्त्येन विशुद्धं भवांतरानुयायित्वात्, प्रधानं पथ्यदनं येषां ते एवंविधाः स्युः. ते सुखेन संस्तारकगजेंद्रमारूढा निर्वहंति, आरोहका अपि शूरादीनां हि शूरा बुद्धिनीतिज्ञाः सशंबलाश्च भवंति ॥ १६ ॥ अयं संस्तारकः परमार्थो मोक्षहेतुत्वेन, तथा परं प्रकृष्टं अतुलमनुष्ठानं तथा स्थविरादीनां प्रधान एष कल्पः परमेत्यादि प्राग्वत् ॥ १७ ॥

तस्मात्कारणात् एतत्त्वया लब्धं जिनवचनामृतविभूषितदेहं धर्मरत्ननिर्मिता वसुवृष्टिः ॥ १८ ॥ प्रवचनकुशलानां साधूनां सुष्टु वा धीरं धैर्यं कृतं त्वया संस्तारकं कुर्वता ॥ १९ ॥ ज्ञानतेजःसंयुक्ता, चारित्रेण शुद्धं शीलं स्वभावो यस्याः, अतिचाररूपत्रासादिदोषाभावात् ॥ २० ॥ हे सुविहित

॥ २१ ॥ तत्तीर्थं ॥ २२ ॥ पूर्वं स्नाता इत्यु-
तैर्जीवलोकसारं ज्ञानादिरत्नाभरणं कृतमात्मनो भवति ॥ २१ ॥ तत्तीर्थं ॥ २२ ॥ पूर्वं स्नाता इत्यु-
क्तं, किं भणंतस्ते तत्र स्नाता इत्याह—आस० आश्रवाणामिंद्रियाणां समाधानहेतुषु प्रवृत्तिः अ-
हितेभ्यो निवृत्तिश्च संवरः समित्यादिः निर्जरातपः त्रयोऽर्थाः समाहिताः यत्र संस्तारके तं त्र्यर्थः प्रा-
कृतेन तीर्थं इति भणंतः शीलव्रतान्येव बध्दानि एतत्तीर्थस्य सोपानानि यैः ॥ २३ ॥ साधवः ॥२४॥
त्रिभुवनराज्यं तीर्थकृत्त्वं केवलज्ञानं मुक्तिर्वा तस्य हेतुर्यः समाधिस्तं प्राप्नोसि, सिद्धांतकल्पे अतुलं
राज्याभिषेकं संस्तारकलक्षणं विपुलफलं लोके विशेषेण हरंति आददति ॥ २५ ॥ अभिनंदति
आह्लादं करोति मम हृदयं, भवद्भिर्मोक्षस्य साधनोपायो लब्धः, परमार्थो ज्ञानादिर्विस्तार्यते यत्र ॥
॥ २६ ॥ संस्तारकगतं साधुं पूर्वानुभूताराधनासंस्तारकगुणान् वा चिंतयंतो देवा अपि आसनशय-
नानि मुंचंति ॥ २७ ॥ संस्तारकगतः साधुश्चंद्र इव प्रेक्षणीयो भवति, सूर्य इव तपस्तेजसा दीप्ति-
मान्, हिम० महाहिमवद्वत् स्थैर्येण विख्यातः ॥ २८ ॥ गुप्त्यादियुतः श्रमणः समाहितमना दर्शन-
ज्ञाने एकाग्रचित्तः; तस्यैव संस्तारकः प्रमाणं ॥ २९ ॥ किमिति संस्तारकगतः साधुर्विशेषेण वर्ण्य-
ते, यतः पर्वतानां मेरुरित्यादि, तथा शोभनानुष्ठानानां मध्ये संस्तारकः ॥ ३० ॥ भण वद कीदृश-

स्य यतेः संस्तारको भणितः, कीदृशे वावष्टभ्यतेऽवष्टंभितस्य करणे येन क्रियमाणेनाविशेषतो जीवः स्थिरीक्रियते पर्यंताराधनायां, एतत्तावद् ज्ञातुमिच्छामि ॥ ३१ ॥ पात्रभूतो योग्य आलोचनायाः ॥ ३४ ॥ प्राकृतत्वात् आत्तचरित्रः, अथवा आयो लाभस्तद्भूतं निरतिचारतया चारित्रं यस्य स, यद्वा आत्मनि चारित्रं यस्य स आयचारित्रः आत्मचारित्रो वा दृढचारित्रो जीव इत्यर्थः ॥ ३६ ॥ त्रिदंडा मनोवचनकायास्तेषां मोचकः प्रथितकीर्तिः ॥ ३७ ॥ षट्कायान्प्रति विरतः ॥ ४१ ॥ जढः त्यक्तः अष्टविधकर्मक्षपणहेतुः संस्तारकः, उत्तमार्थे उद्यतस्य मर्दितकषायस्य हावभावादिविकाररहितस्य लाभः कर्मक्षपणादिः ॥ ४४ ॥ क्षपकस्य ॥ ४५ ॥ प्रथमे क इदानीं तस्य एकदिनार्जितलाभस्य अनर्घ्यस्य सतोऽर्घं कर्तुं शक्तः ॥ ४६ ॥ यः संख्यातभवस्थितिरसंख्यातायुषो हि चारित्रप्रतिपत्तिर्न भवति स साधुपदं प्रतिपन्नः सन्ननुसमयं कर्म क्षपयन् तस्मिन्नेव भवे प्रायः सर्वं कर्म क्षपयति, तस्मिंस्तु पर्यंताराधनासमये साधुर्युक्तो विशेषेणोक्तः तस्यामवस्थायां विशेषतः कर्मक्षपणात् ॥४७॥ लाभमुक्त्वा सौख्यमाह—तण० गतोऽपि निर्लोभं चासौख्यं ॥ ४८ ॥ निप्पुरिस० निःपुरुषे पुरुषरहिते नाटके केऽपि तथा तेन प्रकारेण सहस्रविस्तारे 'सहहत्ति' पाठे तु स्वहस्तविस्तारे देवा

हि वैक्रियलब्ध्या स्वहस्ताभ्यां पात्राणि निःकृष्य द्वात्रिंशद्भेदं नाटकं विस्तारयंति, इति स्वहस्तविस्तारे सहस्रभ्यासेऽथवा पुरुषरहिते नाटके सा न रति-ताहशी न रतिः, या जिनवचने विशाले रतिर्हेतुः जिनवचने परिज्ञाप्यमाने सतीति शेषः ॥ ४९ ॥ जं रा-स्तथा यथा स्वहस्तप्रमाणे संस्तारके रतिः, चक्रवर्ती एतद्वीतरागस्य न भवति, किं तर्हि ग० यत्सुखं रागद्वेषमतिकं यच्च विषयसुखं अनुभवति चक्रवर्ती एतद्वीतरागस्य न भवति, किं तर्हि तत्सुखाद्बहुतरं सुखं वीतरागस्य तत्सुखस्य विषयादिविरक्तत्वेनोपशमात्मकत्वात ॥ ५० ॥ मामाहोह० मा भवत वर्षगणकाः स्तोकेनापि कालेन अप्रमादिनः साधका भवंति पुंडरिकादिवत्, बहवो गब्भ-वासे विशेषेण चिरकालं सुखिता अपि प्रमादपरतंत्रतया जन्ममरणं संसरंतो जीवाः तिपाठे तु अ-त्यतिशयेन खुत्ताः संसारसागरे मग्नाः, इत्यर्थः ॥ ५१ ॥ पच्छावि० पश्चादपि ते प्रयता उद्यताः सं-तः, पया वा पाठे तु प्रतापात् स्वदोषचिंतनोपतापात ॥ ५२ ॥ कीदृशेऽवकाशे संस्तारक इति प्रश्न-स्य निर्वचनमाह—नविकार० नैव कारणं तृणमयः संस्तारको नापि प्रासुकभूमिः, आत्मैव संस्तारो विशुद्धे चारित्रे भवति ॥ ५३ ॥ निच्चंपि० नित्यमपि तस्य भावोद्यतस्याप्रमादिनो यत्र वा क्षेत्रे य-दा वा काले यत्र कापि संस्तारको भवति यथा जिनप्रवचने आख्यातः प्ररूपितो यथाख्यातो यथो-

त्तकारी, अहक्काया पाठे तु यथा जिनप्रवचनं तथैवाख्याता प्ररूपको यथोक्तवादी विहारेऽभ्युद्य-तो द्रव्यतः संलेखनाकरणेन, भावतः कषायपरिहारेण व्यूढोरूढः ॥ ५४ ॥ वासा० वर्षाकालेऽनेकधा तपांसि कृत्वा हेमंते संस्तारकमारोहंति, सर्वसत्वेन सर्ववीर्येण युक्तः ॥ ५५ ॥ अथावष्टंभनप्रश्ननिर्वचनमाह—आसी० सोगंग० उत्तरमथुरातो वणिक्सुतो दक्षिणमथुरां गतः, वणिग्भगिनी अर्णिका, मार्गे पुत्रो जातः, प्रव्रजितो वृद्धत्वे पुष्पभद्रमतेन पोतनपुरं गतः, पुष्पकेतुर्नृपः, पुष्पवतीजौ पुष्पचूलः पुष्पचूला च स्निग्धौ, माता प्रबोधिता दुर्भिक्षे वृद्धौ भिक्षानीता, गंगायां येन येन पार्श्वेन नावं विगलति तद् तद् ब्रुडति, मध्ये स्थितः, सर्वे ब्रुडंति, नाविएहिं पाणीए बुढो, नाणमुप्पन्नं, देवेहिं महिमा कया, पयागतित्थं जायं लोए ॥ ५६ ॥ ५७ ॥ पंच० पंच सनिम्मम० कुंभकारेत्ति एकारोऽलाक्षणिकः, कुंभकारं कडाभिधाने, एगूणत्ति एकेन विराधितत्वात्, सावत्थीए णयरीए जियसत्तुराया, खंदगो कुमारो, पुरंदरजसा भइणी, कुंभकारनगरे दंडकिना राज्ञा परिणीता, तन्मंत्री पालको धिग्जातिः श्रावस्त्यामागतः, खंदगकुमारेण वादे स निर्जितः, तेन साधवो यंत्रघाणके क्षिप्त्वा पिष्टाः, ते सर्वे सिद्धाश्चेति खंदककुमारं विना ॥ ५८ ॥ दंडुत्ति जिणव० सु-

रग्गीजं० सुरेः सवर्णितसयंगीतो इति पाठे तु सर्वांगीणो विघ्नः, मथुरायां नगर्यां यवनो नाम रा-
जा, तेन राज्ञा यमुनाचक्रनगरस्योद्याने कायोत्सर्गस्थो दंडनामा विख्यातयशा यतिर्दृष्टः, तेन पा-
पिना बाणैर्हतो मृतोंतकृत्केवली जातः, देवाः समागताः, शक्रेण भापितो यदि प्रव्रज्यां गृह्णासि त-
दा मुंचे, नान्यथा, प्रपद्य यवन एवमभिग्रहं ललौ, यावदेनं ऋषिघातं स्मरिष्ये तावन्न भोक्ष्येऽर्धभु-
क्तमपि त्यक्ष्ये इति स यवनो न सदा भुक्तः ॥ ६१ ॥ ६२ ॥ आसीसु० ॥ धीधणि० गया इव बु-
द्धितया क्षामया वधधीर्बुद्धिस्तया घणियमत्यर्थं बद्धकक्षः, साकेतपुरे कीर्तिधरनृपः सहदेवी राज्ञी,
तयोः पुत्रः सुकोशलः, पितृभ्यां निष्कासितः स प्रव्रजितः, मासक्षपणपारणे मातृव्याघ्र्या भक्षितः
॥ ६३ ॥ ॥ ६४ ॥ उज्जे० रयणी० रजन्यास्तिसृभिः प्रहरैरिति शेषः, सल्लुंकी शिवा, उज्जयिन्यां
सुहस्तितो नलिनीगुल्मं श्रुत्वा सुभद्राश्रेष्ठिनीसुतोऽवंतिसुकुमालो मातृभार्याननुमतावपि प्रव्रज्य म-
साणे भत्तं पच्चक्खिऊण ठिओ, लोहियगंधेण सावच्चा शिवा आगया, पढमे जन्नुगाणि, वीए ऊ-
रू, तइए पोट्टं, कालगओ, पुप्फाइखुठी सवाथीइ ओ पवइया, गुव्विणी एगा नियत्ता, तत्पुत्रकारितं
देवकुलं महाकालं ॥ ६५ ॥ ६६ ॥

जल्ल० सेहा० एयं० याति विलगति च जल्लो रजोमात्रं मलः कठिनीभूतः पंको मल एव स्वेदेनार्द्रीभूतः, आजिं संग्रामं ईरयति क्षपयति जयतीति यावत् पूर्वावस्थायां सुभटैः सह श्रामण्ये तु कर्मभिर्दे वैरीतः, कात्तिकार्यनामा शरवणसन्निवेशे जातः, रोहीहडे पूर्वविराद्धेन क्षत्रियेण, शक्त्या हतः ॥ ६७ ॥ ॥ ६८ ॥ ॥ ६९ ॥ पाडलि० कोल्ल० अह पाडलिपुत्रपुरे चंद्रगुप्तपुत्रस्य बिंदुसारस्य मंत्री सुबंधुः, तस्य सुहृद् धर्मसिंहः, चंद्रगुप्तप्रदत्तलक्ष्मीः सन् चंद्रश्रीं प्रस्तावात्तामेव परित्यज्य कोल्लयरे प्राप्तः सन् अभ्युद्यतो मरणाय गृध्रपृष्ठमकार्षीत् मृतकलेवरमध्यस्थितः ॥ ७० ॥ ॥ ७१ ॥ ॥ ७२ ॥ पाड० अणु० पाडलीपुरेऽनशनं प्रतिपद्य तत्रैव गोष्ठे निवणोच्चि करीषसंस्तारके सुप्तः शत्रुंजयापराभिधसुबंधुरमात्यः ॥ ७३ ॥ ७४ ॥ काय० अहिं० नामे० चंडवेगः पूर्वापराधितः कोऽपि मंत्री वान्यः तयं तत्कं देहं ॥ ७५ ॥ ७६ ॥ ७७ ॥ कोसं० जल० कौशाम्ब्यां द्वात्रिंशल्ललितगोष्ठिकपुरुषाः श्रुतरहस्याः श्रुतरहस्यविदो नदीतीरे पृथुकाष्ठशय्यासु पादपोपगमनं प्रपन्ना अकालागतनदीपूरेण प्लाविताः समुद्रमध्ये क्षिप्ताश्च ॥ ७८ ॥ ७९ ॥ आसी० तत्र० तस्सा० अह० रिष्टनामामात्यः गणिपि० बहुश्रुतो बहुपरिवारश्च पेयालं रहस्यं सुविहितानां उपाश्रयेऽग्निं दत्वा गतः ॥ ८० ॥ ८१ ॥

॥ ८२ ॥ ८३ ॥ कुरु० फालिः कफगादिः फलं वा, हस्तिनागपुरे कुरुदत्तो नाम इभ्यपुत्रः स्थविराणां समीपे प्रव्रजितो बहुश्रुतो जातः, कदाचिदेकल्लविहारप्रतिमां प्रतिपन्नः पत्तनस्य नगरस्यादूरसामंते पश्चिमां पौरुषीं स्थितः, तत्रैव चत्वरे गोधनं हृत्वा स्तेनाः समागताः, पश्चाद्गोधनस्वामिन आगताः, द्वौ पंथानौ, तैः सम्यगजानानैर्मुनिः पृष्टः कतरेण मार्गेण नीतं गोधनं? मुनिर्न ब्रूते, तैः क्रुद्धैस्तस्य शीर्षे मृत्तिकया पालिं बंधयित्वा चितांगाराः शीर्षे क्षिप्ताः ॥ ८४ ॥ आसीग० आसीद्गजसुकुमालाभिधान इभ्यपुत्रः, सोऽपि कुरुदत्तवत्, नवरमस्य शरीरं आर्द्रचर्मणा वेष्टितं, कीलकानाहत्य जटितं ॥ ८५ ॥ आसीवि० मुंडंगुलिकाभिः पिपीलिकाभिश्चालनीवत् कृतः ॥ ८६ ॥ मंख० मंखलिशब्देन गोशालको ज्ञेयः पुत्रशब्दलोपात्, शिष्यौ भगवतः सर्वानुभूतिसुनक्षत्रनामानौ तेजोलेश्यया उपगतौ समीपागतौ दग्धौ ॥ ८७ ॥ परि० ज्ञपरिज्ञया जानाति, प्रत्याख्यानपरिज्ञया परिहरति सर्वाहारं, चतुर्णामप्याहाराणां भणनेन सागारमनशनं ॥ ८८ ॥ अह० अथवा त्रिविधाहारं प्रत्याख्यानाय पानकाहारमाहारयति समाधिहेतुं, ततः पश्चात्पानकमपि व्युत्सृजति ॥८९॥ अथ कृतांजलिः सन् भणति—'खामेमि' क्षमयामि सर्वसंघं मनोवचनकायैः पूर्वोक्तापराधान् ॥

॥ ९० ॥ सवे० स्पष्टा ॥ ९१ ॥ गुरवः क्षपकमेवमनुशासंति—धीर० पर० अन्यैर्दुरनुचरं ॥ ९२ ॥ नरय० गाथाचतुष्कं स्पष्टं ॥ ९६ ॥ सुवि० हे सुविहित अनंतकायमध्ये आगतगतेन जन्ममरणान्यनंतानि अनंतकृत्वोऽनंतवारान् ॥ ९७ ॥ जन्ममरणरूपातंकहेतुं छिंद ममत्वं ममेति बुद्धिं शरीरात् ॥ ९८ ॥ अन्नं० गाथा ३ स्पष्टाः ॥ १०१ ॥ विशेषतः पुनः क्षपकः क्षामणान्याह—जगआहारो जगदाधारः संघः सर्वोऽपि मम निरवशेषं अनिष्टं क्षमतु, अहमपि शुद्धः क्षमयामि गुणसमूहयुक्तस्य संघस्य ॥ १०२ ॥ आय० परस्स० सवस्सजी० इय० इत्यनेन पूर्वोक्तप्रकारेण क्षमितातिचारः ॥ ६ ॥ जंबा० यदशुभं कर्म असंख्येयाभिर्भवलक्षकोटीभिर्बद्धं तदेकसमयेन विधुनोति स्फेटयति ॥ ७ ॥ इय० इत्येवं यथोक्तं तथा विहारिणः साधोर्विघ्नकारिणी वेदना समुत्तिष्ठति, तस्या विधापनार्थं निर्यामकाः सूरयोऽनुशास्तिं ददति ॥ ८ ॥ जइ० आरोपित आत्मनि आराधनाविस्तरो यैः, अप० कृतपादपोपगमाः, गिरिप्राग्भारं, द्वितीयाऽम् लोपः ॥ ९ ॥ धिइ० धृतौ संतोषेऽत्यर्थं बद्धकक्षाः प्रगुणतया अनु० प्रधानविहारिणः प्रागुक्ताः श्वापददंष्ट्रागता अपि साधयंति उत्तमार्थं सुकोशलादयः ॥ १० ॥ किंपु० विशेषोपसर्गरहितत्वेन तद्भावे वा सिद्धांतश्रुत्या च संगतं आर्तरौद्र-

रहितं मनो येषां तैः किं न निस्तीर्यते? अपि तु निस्तीर्यंत एव ॥ ११ ॥ उज्झू० त्यक्तदेहग्रहाः ॥ १२ ॥ पोरा० पुरातन्यो रोगजराद्या वेदनाः प्रत्युत्पन्नाः क्षुत्पिपासादिकाः, कर्मैव कलंकमशुभव-स्तु तस्य वल्ली संतानं, अन्योऽपि हस्त्यारूढोऽक्लेशेनैव वल्लीस्त्रोटयति ॥ १३ ॥ जं अ० उच्छ्वास-मात्रेण कालेनेति गम्यते ॥ १४ ॥ अठ० अष्टविधकर्ममूलं पापं यदर्जितं ॥ १५ ॥ एवं० एवं मृ-त्वा धीराः संस्तारके गुरोर्गुणैर्गरिष्टे गुरवो धीरा इत्यस्य विशेषणं वा, तृतीयभवेन तेनैव भवेन वा सिध्येयुः क्षीणकर्मरजसः ॥ १६ ॥ गुत्ती० संघो० संघो मुकुट इव मुकुटः, किंभूतः? संयमतपोनि-यमा एव यत्कनकं तेन कृत इति विशेषणं लुप्तविभक्तिकं साम्यासं सामायिकं चारित्रमित्यर्थः, त-दादिरूपैस्त्रिभी रत्नैः प्रत्योपितैः परिकर्मितैर्महर्घैः, प्रत्योपितशब्दस्य परनिपातः प्राकृतत्वेन, मुकुटो हि ज्वरविषापहारादिमणिसंपर्काद्गुणाढ्यः कनककृतशिखरत्रयोऽपि रत्नत्रयालंकृतश्च भवति श्रीसंघः, केषां मुकुटो भवतीत्याह—सेंद्राणामपि देवानां, क? सदेवेति लोकमध्ये देवमनुजसुरेषु सत्स्वपी-ति भावः. किंभूतः? दुर्लभतपस्तापविशुद्धः कर्ममलापनयनात्, ननु संघस्य मुकुटमात्रतास्तु, महा-मुकुटत्वं नितरां विशुद्धत्वं च पुनः सुवर्णादिघटितमुकुटस्यैवेत्याशंक्याह—सुवि० स संघ एव सुवि-

शुद्धो महामुकुटो न तु सुवर्णादिमुकुटस्तस्याभिमानानुरागादिवृद्धिहेतुत्वेन कर्ममलोपचयकारित्वात्, उज्ज्वलतरो विशुद्धो—विसुद्धो तो महामुउडोत्ति पाठांतरे त्वेवं व्याख्या—संघमुकुटः सेंद्राणामपि देवानां दुर्लभतरः, क सदेवेति प्राग्वत्, विशुद्धः कर्ममलापगमनात्, ततः संघमुकुटादन्यो महानपि मुकुटः सुवर्णादिकृतोऽविशुद्ध एवाभिमानादिहेतुत्वेन कर्मोपचयकारित्वात् ॥ १८ ॥ उसभं० लोगण चंद० दह्यतापि ग्रीष्मे कालमरणशिलाकायां कवल्लत्ति मंमकपचनिका, सूर्येणेव तपःकिरणसहस्रप्रचंडेन, चंद्रेणेव सौम्यलेश्याचंद्रिकाऽभ्यधिकेन कषायलोकविजयं कुर्वता ध्यानोपयोगयुक्तचित्तेन विभूतिमता चित्रेण चित्रनाम्ना प्रसिद्धेनान्येन महर्षिणा चंद्रकवेध्यं राधावेधनं दुर्लभं लब्धं केवलसदृशं केवलज्ञानरूपं समाउत्ति केवलज्ञानेन सममायुः परिक्षीणं उत्तमलेश्यानुगतः ॥१९॥ यावत् ॥ २१ ॥ एवं पूर्वोक्तप्रकारेण मयाभिष्टुताः स्तुताः संस्तारकगजेंद्रमारूढाः संतः सुसम० नरेंद्रा हि प्रौढगजेंद्रस्कंधमारोहंति, सुखस्य मुक्तिसुखस्य शुभस्य वा संक्रांतिं संसारदुःखादानिःसृत्य प्राप्तिं मम ददतु ॥ १२२ ॥ इति श्रीसंस्तारकप्रकीर्णकावचूरिः समाप्ता, कृतिरियं श्रीगुणरत्नसूरिपादानां, श्रीरस्तु ॥ आ ग्रंथो श्रीजामनगरनिवासी पंडित हीरालाल हंसराजे पोताना छापखानामां छाप्यो छे.

